# मधुलिप्सा

संस्कृत-एकाङ्किका



लेखकः—

श्रीवासुदेवप्रसादआचार्यः

लोकभाषा-प्रचार-समितिः

# मधुलिप्सा

( संस्कृत-एकाङ्किका )


लेखक:

श्रीवासुदेवप्रसादआचार्यः

(साहित्याचार्यः, Dip in English)

अध्यापकः गोपीनाथपुरसंस्कृतमहाविद्यालयः

पो:— यदुपुरम्

मण्डलम्— कटकम्





श्रीवासुदेवप्रसादआचार्यः

ग्रा/पो: — बडपडा

मण्डलम्— कटकम

प्रकाशिका -

लोकभाषा-प्रचार-समितिः

शरधाबालि, पुरी- 752002





प्रकाशकाल:

फाल्गुनपूर्णिमायाम्— 1990

मुद्रणम्

श्रीनारायणप्रेस्

बालिसाहि, पुरी- 752001

मूल्यम्— सप्तरूप्यकाणि

# समर्पणम्

प्राज्वालयत् प्रथमतो मम चित्तलग्नम्
ज्ञानप्रदीपमपहृत्य तमश्चयं यः ।
तत्-तात-पाद-कर-पुष्करयोर्मयेयम्
एकाङ्किकाद्यरचना सुसमर्पिताऽस्तु ।।

श्रीवासुदेवप्रसादस्य

# शुभाशंसा

सजयति जानकी–जानिः ।

आयुष्मता श्रीमता वासुदेवेन विरचितेऽयं "मधुलिप्सा"भिधाना एकाङ्किका पाठमात्रेण मनसि मे अनिर्वचनीया-मानन्द-कल्लोलिनीं व्यतनुत ।

अलब्ध-वैदग्ध्य-विलास-मुग्धया धिया समुल्लिखिता कविकुल-ललामस्य बाणभट्टस्य कादम्बरी कथेव श्रीमतो लेखकस्य प्रथमलेखनी सम्भूतेयमेकाङ्किका सहृदयानां हृदयावर्जनं विधास्यतीति नास्ति विचिकित्साया: कश्चिदवसरः ।

एकाङ्किकायामस्यां भाषाया: सावलीलता, वर्णानां माधुर्य-व्यञ्जकता, भावस्य हृदयावर्जकता, शब्दार्थालङ्काराणां प्रचुरता, सर्वोपरि उच्छलितस्य रसस्यावेगमयता च तत्र तत्र विदुषां दृष्टिपथमागत्य सौम्य-स्यास्य कवयितुरगामिनीं समुन्नतिं सूचयिष्यन्ति ।

विदग्धानां हृदयहारिणीयं तन्वी "मधुलिप्सा" गुणालङ्कार-रस-भावविभूषिता पदे पदे मञ्जु-मञ्जीर-शिञ्जानेन जनमनः–सुमधुलिप्सां जनयिष्यतीति मदीयो विचारः ।

अस्यामेकाङ्किकायां सारङ्गवाहिनी भूभृदित्यत्र शब्दश्लेषस्य, सुन्दरी रमणीकान्ता इत्यत्र पुनरुक्त वदा भासस्य, "सुमञ्जुले वञ्जुल कुञ्ज-पुञ्ज" इत्यत्रानुप्रासस्य, 'विराजिता चित्रनिभा विराजि' इत्यत्र यमकस्य 'वृद्धा स्त्रीव व्यपगतरसा मालती वीतपुष्पे'त्यत्र श्लेषप्रतिभोत्थितायाः उपमायाः, 'विकीर्ण-तारा सित-पुष्प-पुञ्जा' इत्यत्र रूपकस्य, किं मन्नेत्र-मन:-प्रमोद जननी लावण्यमूर्त्तिः स्वयमित्यत्र संदेहस्य, नेदं तदास्यं परिपूर्ण

चन्द्रः' इत्यत्र अपह्नुतिः—एवं शब्दार्थालंकाराणां यथास्थानं यथायोग्यञ्च विनिवेशनं सहृदयानां हृदयनिकेतनं नितरामामोदयिष्यति ।

रसैकतान-निमग्न-मानसोऽयं नूतनः कविः ध्वन्यात्मकस्य शृङ्गारस्य द्वावेव प्रधानभेदौ संभोगविप्रलम्भाख्यौ एकाङ्किकायामस्यां सम्यग्वर्णितवान् । यथास्थानमेतद् वर्णनमवलोक्य रसग्रहणचतुराधीरधौरेयाः अमन्दमानन्दं नूनं लप्स्यन्ते ।

नाहं छात्रवात्सल्येन एतत् लिखामि । परन्तु लेखस्यास्य याथार्थ्यं सतां पुरतः उपस्थापयामि । सौम्यस्यास्य श्रीमतो वासुदेवस्य लेखनी बलिष्ठा उत्तरोत्तरं मधुवर्षिणी भवतादित्युक्त्वा विरमामि ।

पण्डितश्रीवाञ्छानिधिदाशशर्मा

अभयाभवनम्, केन्द्रापड़ा

अक्षयतृतीया

# लेखकस्याभिमतम्

मान्याः विद्वद्वृन्दाः

पुण्यभूमौ भारतवर्षे गीर्वाणवाणी एव संस्कृतिसंरक्षिणी, सर्वभाषा जननी, राष्ट्रैक्यस्य संसाधिनीति सर्वैः मुक्तकण्ठेन स्वीकृता । परन्तु विषादस्य विषयः एतस्याः साम्प्रतिकी स्थितिः क्षीणनीरा नदीधारेव संजाता । एतद्विषये भारतीयानां चेतः न दूयते, न व्यथते, न वा व्याकुली भवति । तथापि एनां पूर्णगर्भां सम्पादयितुं येषां निरवच्छिन्नोऽध्यवसायो विद्यते तेषां कृते ममेयं श्रद्धा भक्ति-स्वरूपिणी एकाङ्किका मधुलिप्सा नाम्नी । अस्यां निहितेन स्वात्मभावेन सह तेषां महोदयानां आत्मसमन्वयं कामये ।

एतत् कर्मणि सुगृहीतनामधेयानां अस्मद् गुरुपादानां श्रीवाञ्छानिधिदाशमहोदयानां सदाशिषः मादृशि अधमे नूनं निपतिताः आसन् । नोचेत् एतद्गुरुकार्यं कदापि न समभविष्यत् । अपि च श्रीसुदर्शनाचार्य, श्रीकृष्णचन्द्रपाणि, श्रीगोपीनाथषड्ङ्गी, श्रीकेशवचन्द्रमहापात्रादिमहोदयानां समुत्साहः अविस्मरणीयः । तेभ्यः सर्वेभ्यः कृतज्ञतां ज्ञापयामि ।

परिशेषे श्रीरमेशचन्द्रदाश श्रीगगनविहारीकर सम्राट् विपिनविहारीदाश-प्रमुखानां छात्राणां सभक्तिसहयोगोऽपि अविस्मरणीयः । ते सर्वे सुखसमृद्धिभाजो भवन्त्विति मे परमकारुणिकस्य भगवतः पदकमलयोः प्रार्थना ।

अस्यां नाटिकायां परिदृष्टं मदीयमज्ञानजं मुद्रणजं वा प्रमादं सदयाः विद्वद्वृन्दाः मर्षयेयुरिति मे विनम्रनिवेदनम् ।

श्रीवासुदेवप्रसादाचार्यः

# प्रथमदृश्यम्

[ देवसभायामिन्द्रादयो देवा आसीनाः, तुम्बुरोः वीणा क्वणनं, चित्ररथस्य मृदङ्गवादनं, तिलोत्तमादीनाम् अप्सरसां लास्य-मधुर-सङ्गीत-मूर्च्छना च । ]

आयातोऽयं शिशिरमलिनां भासयन् स्वीयदीप्त्या
सर्वामाशां परिमुकुलयन् कुड्मलानि द्रुमेषु ।
चिन्ताग्रस्तां पथिकवनितां खेदयन् म्लापयंश्च
भू-जातानां मनसि जनयन् मोदभारं वसन्तः ॥ १

तीरे तीरे मलयपवनो वीचि-वाद्ये निमग्नो
वंशीध्वानं सुमधुरमहो ! वंशकुञ्जे तनोति ।
चूतेचूते मद कल-पिका गायका लोलभृङ्गा-
गुञ्जन्तस्ते ललितसुरभेः स्वागतं व्याहरन्ति ॥ २

मन्दं मन्दं वहति पवनश्चारुगन्धिश्च शीतः
कुञ्जे कुञ्जे विकचकुसुमान्याशुचित्तं हरन्ति ।
वृक्षे वृक्षे किसलयततिः सान्द्ररागं व्यनक्ति
हासं हासं प्रकृतिललना लास्यलीलां तनोति ॥ ३

वृद्धास्त्रीव व्यपगतरसा मालती वीतपुष्पा
धीरं धीरं लपति सततं केतकी भृङ्गनादैः ।
कामोन्मत्ता नटति मधुरं माधवी मन्दवातैः
पुष्पव्याजे हसति ललितं मल्लिकाप्रेमिकेव ॥ ४

श्रावं श्रावं पिककलरवं दुःखिनी काऽपि तन्वी
चञ्चन्मत्त भ्रमर-रुचिरां फुल्लवल्लीं विलोक्य ।
कान्त प्रेम-प्रवण-हृदया लोतक-स्नात-नेत्रा
स्मारं स्मारं नयति दिवसान् रम्यगाथां प्रियस्य ॥ ५

देवराजः— (आसनात् उत्थाय सहर्षम्) धन्य तुम्बुरो । धन्य चित्ररथ । धन्यास्तिलोत्तमादयः अप्सरसः । युष्माकं त्रौर्य्यत्रिकं मानसं मे निमज्जयति अगाधे प्रमोदसागरे (पुनस्तदेव पठति) ।

[ ततः प्रविशति देवर्षि नारदः । ]

नारदः— नारायणाय शरदब्ज-निभाननाय
नारायणाय कमलायत लोचनाय ।
नारायणाय सकल-स्थिति कारणाय
नारायणाय पुरुषाय नमः परस्मै ॥ ६

जयतु जयतु देवराज ।

देवराजः— (नारदं विलोक्य) अये ! कथं देवर्षिः ?

प्रोल्लास्याशा मुदयति नवो नोऽद्य सौभाग्य-भास्वान्
किं वास्माकं विकसति महा-पुण्यवृक्षः सुरम्यः ।
चित्ते चित्ते वहति नितरां प्रीति-पीयूष-धारा
धन्या धन्या वयमपि पुनः पीठमेतच्च धन्यम् ॥ ७

देवर्षे ! शुभोदर्कं भवदागमनं पवित्रयति मे नेत्र युगलं। सदयं अस्मिन् रत्नासने उपविशतु । (इति आसने उपवेशयति) ।

नारदः— देवराज ! अपि कुशलं भवतः ? स्वर्गवासिनामपि ॥

देवराजः— देवर्षे ! सर्वेषां नः स्वर्गवासिनां कुशलं परन्तु देवर्षेः अतर्किता-गमनं मानसं मे तरली करोति । सन्देहशिखरे आरोपयति च। कथयतु का वार्त्ताधुना जीवलोकस्य ?

नारदः— (स्मितं कृत्वा) सर्वं शुभं जीवलोकस्य परन्तु........ ।

देवराजः— (स विस्मयं) परन्तु ? ............ वदतु देवर्षे ! शीघ्रं वदतु । मानसं मे व्यथते । उदयन्ति मनसि मे च नवीनाः प्रश्नाः ।

नारदः— (सावष्टम्भं) ज्ञातो भवद्भिः मर्त्यवासी दमन महर्षिः ?

देवराजः— (विचिन्त्य) योऽधुना कलनादिन्याः नर्मदायाः सुरम्ये तीरे तपः साधयति ?

नारदः— अथ किम् ।

देवराजः— किं तेन ?

नारदः— मग्नो गाढ तपस्यायां साम्प्रतं स जितेन्द्रियः ।

देवराजः— (साश्चर्यं) कथम् ? कथम् ?

नारदः— भवदासन सम्प्राप्त्यै स मुनिर्यत्न तत्परः ॥ ८

देवराजः— (सविस्मयं, किं कथयति ? मदीय पदमाकाङ्क्ष्य गाढतपो निमग्नः सः ? (सभयं परितो विलोक्य) किं करोमि ? देवर्षे ! किं करोमि ? का गतिः ? कश्च उपायः ?

नारदः— (सचिन्तः) अस्ति उपायो देवराज । अस्ति । स च अतीव दुस्साध्यः ।

देवराजः— (साग्रहं) देवर्षे ! यदि कश्चित् उपायो वर्त्तते तर्हि वदतु । यस्यानुष्ठानेन चिरं स्थास्यति मे पदं भविष्यामि च यथा सुखभाक् ।

नारदः— (स्वगतं) अहो ! भुवनत्रयेष्वपि सर्वे अनित्य सुखाभिलाषिणः ? अयं स्वयं देवराजोऽपि ? (प्रकाशं) यदि केनापि प्रकारेण महर्षेः दमनस्य तपोभङ्गः क्रियेत ।

देवराजः— (साश्चर्यं) किमुक्तं भवता ? महर्षेस्तपोभङ्गः ? यस्य नाम स्मरणेन प्रकम्पते त्रिभुवनं, दोदुल्यन्ते महीधराः, स्तब्धी भवन्ति समीरणाः शुष्यन्ति च वारिधयः तस्य मुनेः.... ...... ।

नारदः— वाढम्, तस्य मुनेः तपोभङ्गः, महात्मनां किं हि दुस्साध्यम् ?

देवराजः— कथमेतत् सम्भवेत् ?

नारदः— (स्मितं कृत्वा) देवराजस्य अज्ञातं किमस्ति ?

देवराजः— (सभ्रूभङ्गं) सत्यं मया उद्विग्नत्वात् किञ्चिन्नावधारितं । अतः समुचित-मार्ग प्रदर्शी मे भवतु ।

नारदः— यदि प्रेरयिष्यति रूपमयीं मेनकां तत् समीपम् ।

देवराजः— किं तया ?

नारदः— नवयौवना सा स्वविलासभङ्गिभिः तन्मानसं मोहयित्वा तपो विहन्तुं नूनं शक्ष्यति । तथाहि—

सुन्दरी रमणी-कान्ता-पाङ्ग-विभ्रम-भङ्गिभिः ।
दिवौकसोऽपि मुह्यन्ते किं पुनर्मर्त्यवासिनः ? ९ ॥

देवराजः— (सानन्दः) देवर्षे ! शोभनं शोभनं उक्तं भवता । (मेनकाभिमुखीभूय कम्पित करेण निर्दिश्य) ।

हे मेनके ! नवविलास-कला-प्रवीणे !
मर्त्यं प्रयाहि सहसा मम कार्यसिद्ध्यै ।
विघ्नं विधाय दमनस्य तपः समाधौ
मानं पदञ्च मम रक्ष विलोल नेत्रे ! ॥ १० ॥

मेनका— (स्वगतं) अहो ! पुनरपि दुःखस्य कालः समागतः । किं करोमि मन्दभागिनी खलु अहम् । (प्रकाशं) यदाज्ञापयति देवराज !

देवराजः— (मातलीं लक्ष्यीकृत्य) मातले ! एकस्मिन् कार्ये तव साहाय्यं कामये ।

मातलिः— (सहसाभिसृत्य) मान्य ! आज्ञा प्रदानेन कृतार्थयतु ।

देवराजः— भद्र !

शान्तं स्निग्धं विहगमुखरं भृङ्ग-झङ्कार-रम्यम्
याहि क्षिप्रं दमन-मुनिनालंकृतं तत्पदं त्वम् ।
प्रस्यन्दन्ती कलकलरवैर्नर्मदा पुण्यतोया
स्वान्ते स्वान्ते सृजति नितरां धर्मभावं हि यत्र ॥ ११ ॥

मातलिः — (सचिन्तः) किमर्थं गमिष्यामि ?

देवराजः — तदाश्रमस्य अनतिदूरे मेनकां परित्यज्य आगच्छ ।(कर्णे एवमेव)

मेनका — (वाष्पगद्गद्कण्ठा देवराज ! पुनः कदा आगमिष्यतीयं मन्द-भागा स्वर्लोकम् ?

देवराजः — अयि !

भविष्यसि यदा कार्ये परिपूर्ण मनोरथा ।
तदा गमिष्यसि स्वर्गं पुनर्मातलिना समम् ।। १२ ।।

देवराजः — (कन्दर्पाभिमुखीभूय) रतिपते !

कन्दर्पः — (समुपगम्य) देवराज ! किं मत्तः कामयते ?

देवराजः — यथाकालं तत्र त्वमपि याहि । मम कार्यसिद्धये मेनकायाश्च सहायको भव ।

कन्दर्पः — तत्र किं करणीयं मया ?

देवराजः — यथाम्बुवाहो दिवमावृणोति सर्वं च विश्वं सघनान्धकारः ।
यथा-मल-ज्ञानमसद्विचार स्तथावृणुत्वं हृदयं महर्षेः ।। १३

कन्दर्पः — कृतार्थोऽहं यतः देवराजः माम् आज्ञा पयति । (प्रकाशं) भवतां आदेशः शिरोधार्यः (प्रस्थितः) ।

देवराजः — मातले ! त्वरितं गच्छ । सम्पादय च स्वकार्यम् ।

मातलिः — यथादिशति देवराज ! (मेनकाभिमुखी भूयः) आगच्छ मातः आगच्छ । (उभौ प्रस्थितौ) ।

देवराजः — (नारदं विलोक्य) देवर्षे ! किं पूर्णमनोरथः भवेयम् ? एतत् कथं भवते रोचते ?

नारदः — (स्मितं कृत्वा) नूनं भविष्यति देवराज ! भविष्यति नूनं, यतः प्रयास साध्या सिद्धिः । मह्यमपि एतत् भृशं रोचते । प्रयातु चिन्ता

विहाय सानन्दं कालं यापयतु। जगत् पितरि भगवति नारायणे ममेयं प्रार्थना।

विभातु लोके तव कीर्त्ति-कौमुदी
विराजतां ते जय केतनं दिवि।
विपक्षवृन्दो विलयं प्रयातु ते
सदा त्वमेवं कुरुशासनं दिवः ॥ १४ ॥

देवराजः— अहं चिराय ऋणी संजातः भवतः समीपे।

नारदः— मैवं वदतु देवराज! मैवं वदतु। हृदये ग्लानिं मा कृथाः। स्वकार्ये च अग्रणी भवताम्। अहमधुना गच्छामि वैकुण्ठधाम।

(प्रस्थितः। तदनु सर्वे प्रस्थिताः)

इति प्रथमदृश्यम्

—*—

# द्वितीयदृश्यम्

[ रम्योपवनं दमनमुनिः ध्यानमग्नः सम्मुखे पूजोपकरणानि च ]

दमन— ॐ कृष्णाय नमः, ॐ कृष्णाय नमः, ॐ कृष्णाय नमः।

हे नन्दात्मज ! हे जगत्त्रय पते ! हे कंस नाशिन् ! हरे !
हे भक्तप्रिय ! हे सुरासुरगुरो ! हे कृष्ण ! हे केशव !
हे पीताम्बर ! हे जनार्दन ! विभो ! गोविन्द ! हे माधव !
त्वत्-पादाब्ज-युगं गतोऽस्मि शरणं हे श्रीपते ! पाहिमाम् ॥

(नेपथ्ये) भो ! त्रायस्व त्रायस्व माम्।

दमनः— (नयने उन्मील्य स्वगतम्) कस्यायमार्त्तनादः ? चित्तं मे आन्दोलयति, विक्षोभयति च। येन मम ध्यानमपि भग्नं (परितो विलोक्य) भवतु इमं पर्वत शिखरमारूह्य जानामि कस्यायमार्त्तनाद इति। (पर्वतमारोहति)।

(पुनरपि नेपथ्ये) को विद्यते त्रायस्व मां त्रायस्व ।

दमनः— (चिन्तां नाटयन्) अहो ! अयं कस्याश्चित् अवलायाः आर्त्त चित्कारः। मन्ये अस्थाने दुष्टपीड़िता काऽपि अवला (प्रकाशं) न भेतव्यं न भेतव्यम्। अयमहं आगच्छामि।
(ततः प्रविशति अवलां स्कन्धे गृहीत्वा भीमो राक्षसः)।

दमनः— (दूरादवलोक्य)

रे दुष्ट ! दैत्य ! कुमते ! शठ ! हीन ! पापिन् !
किं धर्महीन-खल-कर्मसु तेऽभिलाषः
यन्नाम-संस्मरण-कम्पित-सर्वविश्वम्
जानासि किं न दमनस्य पदं त्वमेतत् ॥ २ ॥

रे रे कौणप-कुल कलङ्क ! दुर्वलायामवलायां पापमाचरसि ?

रे क्षुद्रमते ! त्वं किं न जानासि अयं दमन मुनेराश्रम इति ? न जानासि किं वा तत् तपः प्रभावं ? रे रे पापिष्ठ ! दूरमपसर। नोचेत् अचिरेणैव भस्मसाद् भविष्यसि ममाभिशाप वह्निना। (अवलां परित्यज्य राक्षसस्य पलायनम् )।

दमनः— (समुपागम्य विलोक्य च स्वगतम्) अहो ! क्व इदं श्वापद-सङ्कुलं घनं काननं क्व च कुसुम सुकुमारा नवीनेयं तरुणी ? तर्हि केयम् ?

किं मन्नेत्र मनः प्रमोद-जननी लावण्य-मूर्त्तिः स्वयम् ।
किं वा मूर्त्तिमती रुचिः किमथवा पीयूष-धारा-परा।
किं स्वर्गात् स्खलिता विलोलनयना देवी मनो-मोहिनी,
किं वा रूपमयी पयोधितनया किं शैलराजात्मजा ।। ३

अहो ! पितामहस्यापि काले काले भ्रान्तिरेषा यत् सः पङ्कनिकरात् विकाशयति सुकोमलं कमलम्। किं कोकिलस्य कण्ठे अर्पयति मधुमयं कुहुरुतम्। शुक्तिकागर्भेषु आपूरयति महार्घं मुक्ताजालम्। इमां नवनीत-कोमलाम् अवलां घनवनाकीर्णे श्वापदपरिपूर्णे अस्मिन् घोरे कान्तारे ........

(उपविश्य) किमियं गतजीविता ? (शरीरे हस्तं सञ्चाल्य) अहो ! प्राणान् धारयति। मन्ये भीतिवशादियं मूर्च्छिता। भवतु सज्ञा-लाभाय यतिष्ये। (कमण्डलोः जलमानीय मुखे सिञ्चति पल्लवव्य-जनेन बीजयति च)।

( नेपथ्ये )

को ध्येयः स्वात्मगो देवः किं कार्यं परमङ्गलम् ।
कः काम्या जगतः शान्तिः किं लक्ष्यं परमं पदम् ।। ४

अवला — (सज्ञां लब्ध्वा) भो ! को विद्यते त्रायस्व मां त्रायस्व दुष्टराक्षस कवलात् ।

दमनः— (सावष्टम्भं) मा भेतव्यम् । सम्प्रति दूरं गतः स दुष्टः । नास्त्यधुना भयस्यावकाशः (शरीरे हस्तं सञ्चाल्य) वत्से ! चक्षुषी उन्मील्य पश्य । (मूर्च्छिता अवला चक्षुषी उन्मील्य तपोधनं दृष्ट्वा) ।

अवला— (गद्गद् कण्ठा) को भवान् ? ममाद्य खलु नव-जीवनं प्रदाय पितृकार्यं कृतवान् ।

दमनः— वत्से ! तन्न । विधातुरिच्छया त्वं लब्धजीविता । इतः स्वल्पदूरे वर्त्तते मे तपोवनं, दमनोऽस्मि नामतः । सहसा तव करुणार्त्तध्वनिं निशम्य आगतोऽहम् । वत्से ! भयं विहाय उत्तिष्ठ । स्वपरिचय-प्रदानेन च संशयं ममापनय ।

अवला—(उत्थाय स्वगतम्) किमधुना करिष्यामि ? किं वा कथयिष्यामि ? विशेषतः देवराजस्य आज्ञा परिपालनीया । भवतु छलं तावत् आश्रये (प्रकाशं) कथयामि पश्चात् सर्वम् । भयाति-भीतया खलु विस्मृतम् । हे ! यतिराज । क्षणकालम् अपेक्षताम् । संस्मृत्य सर्वं कथयामि ।

दमनः— भवतु ।

अवला – अहं स्वर्गाप्सरा मेनकाभिधाना ।

दमनः— (सविस्मयं) त्वं स्वर्गाप्सरा मेनका ? इदं श्वापद-सङ्कुलं घनं काननं एकाकिनी कथमागताऽसि ?

मेनका— (चिन्तां नाटयन्ती) तर्हि शृण्वन्तु भवन्तः । अहमेकदा देवसभायां तिलोत्तमादिभिः अप्सरोभिः सार्द्धं लास्य-लीलां कृतवती ।

दमनः— ततः किम् ?

मेनका— तदाहं तत्रस्थौ रूपवन्तावश्विनीकुमारौ दृष्ट्वा.........
(लज्जां नाटितवती) ।

दमनः— किं लज्जया ? परस्तावत् कथय ।

मेनका— मम मति-विभ्रमोऽभवत् । नर्त्तने च स्खलनं जातम् ।

दमनः— ततः किम् ?

मेनका— ततो मदीयां चित्तवृत्तिं विज्ञाय समुद्दीप्त-क्रोधानलः सुरेन्द्रः प्रददौ वज्रपुरुषमभिशापम् ।

दमनः— (साश्चर्यम्) वज्रपरुषोऽभिशापः ? कीदृशः सः ?

मेनका— दुर्विनीते ! यतो नृत्येऽभवत्ते मति विभ्रमः ।
विपत्त्यक्त्वा कियत् कालं भवत्वं भववासिनी ।' ५

दमनः— (विषादं नाटयन्) अहो ! कठोरोऽभिशापः ? सहसा देवराजस्य एतन्न समीचीनम् । ततस्ततः ?

मेनका— ततस्तदाज्ञया............( वाष्पगद्गद्कण्ठा ) ।

दमनः— वत्से ! मा अधीरा भव । स्थिरमनसा कथय ।

मेनका— ततस्तदाज्ञया कोऽपि एक स्तदनुचरः मामानीय अस्मिन् पर्वते वित्यज्य दिवंगतः । ततो नियतिं निन्दन्ती एकाकिनी भ्रमन्ती अस्य दुरात्मनः कवले निपतिता ।

दमनः— (हस्तेन परामृशन्) वत्से ! विधातुरिच्छां विना न किञ्चित् संघटते त्रिभुवने । अतो विषादेनालम् ।

मेनका—(सकरुणं) अहो ! किं करोमि ? क्व वा गच्छामि ? अद्य दशदिशः मे शून्याः । दुःखिनी खलु अहम् ।

दमनः— वत्से ! नोद्विग्ना भव । संसारे सर्वे सुखदुःखभाजो भवन्ति । यः अद्य दुःखाम्बुधौ निमज्जति सः श्वः सुख-कानने विहरति । यश्च अद्य सुख कानन-विहारी स पुनः सीदति दुःखकान्तारे । सुखदुःख द्वयन्तु सर्वेषां कृते । अतो विषण्ण-हृदया मा भव । यतः तत् सुखदुःख द्वयम्-

जगति सकल जन्तून् नर्त्तयद् वर्त्तते तव्
प्रभवति कवलात् कः मोक्तुमात्मानमस्य ।
फलयुगलमिवात्मा-नोकहस्यैक वृन्ते
मधुर-मधुर-माद्यं चापरं पूर्णतिक्तम् ॥ ६

मेनका — (गद्गदकण्ठा) हे यतीन्द्र ! नास्ति ममाधुना काचिदन्यागतिः । कामये भवत् पाद-पङ्कजं संसेव्य कियत्कालमतिवाहयितुं भवदीये तपोवने । अनुगृह्णातु दुःखिनीं मां भवतः सुरम्यतपोवन निवासाय अनुमतिप्रदानेन ।

दमनः — (मुखमवलोक्य) वत्से ! उञ्छवृत्त्या जीवननिर्वाहः सुदुष्करः (शिरसि हस्तं संचाल्य) कोमलतमं तवाङ्गं कथं सहिष्यते तत् कष्टं ?

मेनका— तर्हि अनाथायाः गतिः का ? (इति वाष्पाणि मुञ्चति ) ।

दमनः — (स्वकीयवस्त्रेण तस्याः अश्रूणि मार्जयन्) वत्से ! शोकचित्ता मा भव । आगच्छ मया सह मत्तपोवनपदम् । तत्रावस्थाय धृतब्रह्मचारिव्रता त्वं निसर्ग-रमणीयां प्रकृति शोभां दर्शं दर्शं विहगानां कल-काकलीञ्च श्रावं श्रावं, भगवत् महिमानञ्च गायं गायं यापयिष्यसि तानि अभिशाप दिनानि स्वल्पकालेन ।

मेनका — (वाष्पकण्ठा) मन्दभागिन्याः मम इयती भाग्यसंपत संभवेत् ?

दमनः— अयि !

भवं हि भङ्गुरं मत्वा वत्से ! मा गाः शुचं कदा ।
देवं संपूजयारण्ये विस्मृत्याशु मनोव्यथाम् ॥ ७

मेनका— (सहर्षं स्वगतम्) अधुना लब्धः मया उपायः। देहि धैर्यं हे देवराज ! देहि धैर्यं यथा ते मनोरथं साधयितुं शक्ता भवेत् मादृशी अधमा (प्रकाशं) पितः ! किमधिकं कथयामि ? यथा ते रोचते यथा च मद्विधाया अनाथाया गतिर्भवेत् ।

दमनः— (निःश्वस्य) भवतु । तर्हि आगच्छ वत्से ! आगच्छ । अयं आसन्नः सन्ध्याकालः यथाहि पश्य—

अस्ताचलं याति मरीचिमाली नीडं स्वकीयञ्च विहङ्ग संघः ।
प्रह्लादयन् सर्व-जगन्मयूखैः पूर्वाद्रि-शृङ्गात् समुदेति चन्द्रः ॥

अपिच—

कोकद्वन्द्वं रटति करुणं भावयद् भाविदुःखम्
धीरं धीरं कुसुम-सुरभिः सान्ध्यवातश्च वाति ।
हित्वाक्षिप्रं गत-परिमलां म्लान राजीव-राजिम्
हर्षोत्फुल्ला श्चपलमधुपाः कैरवेषु भ्रमन्ति ॥ ९

अपिच—

चन्द्रज्योत्स्ना पतति पवना-धूत-पर्णान्तरालात्
फुल्लत्पुष्पा उपवनलता श्चित्तमामोदयन्ति ।
कूजन्त्येते समदविहगा नीडमावर्त्तमानाः
प्रत्यायान्ति भ्रमणविरता आश्रमान्तं कुरङ्गाः ॥ १०

मेनका—(विलोक्य) मान्य ! आश्रमोपवनस्य सायं शोभा चित्त विनोदिनी तथाहि चन्द्रमसः कर स्पर्शेन वृक्ष-लता-पर्णानि रौप्यमयानीव दृश्यन्ते । उर्मिलं सरसीजलं क्षरत्-चन्द्रकर-निकरमिव आभाति । तनुं पुलकयन् शीतलः समीरः मन्दं मन्दं वहति । कुसुमानि वृक्षे वृक्षे विकसन्ति । भ्रमराः रम्य-झङ्कार मातन्वन्ति । नीडस्थाः विहङ्ग-शावकाः चुङ्कृतैः कुञ्जं मुखरयन्ति च ।

दमनः— वत्से ! सत्वरमागच्छ । अपयाति मे तपोबेला ।

(इति हस्ते धृत्वा नयति) ।

इति द्वितीयदृश्यम् ।

—*—

## तृतीयदृश्यम्

[ ततः प्रविशतः कन्दर्पः रतिश्च ]

कन्दर्पः— (स्मितं कृत्वा) अयि ! रते ! वक्तुं शक्नोषि किं समासादिता कास्थलीति ?

रतिः— (परितो विलोक्य सहर्षं) स्वामिन् ! वञ्जुल-लताकुञ्ज-सुमञ्जुलं विहग-काकली-विलसितं, व्रतती-व्रात-परिवृतं, विविध-प्रसून-फल-राजिभिः रमणीयं पूततमं तपोवनमिति तर्कये ।

अपिच—

व्याप्तं नभः सुन्दर ! यज्ञधूमैर्गायन्ति कीराः शिव-राम-नाम ।
कुर्वन्ति लीलां कुसुमैश्च भृङ्गा नूनं तपोभूरिति मे विचारः ॥ १

कन्दर्पः— (सस्मितं) रते ! युक्तमुक्तं त्वया इदं तपोवनमिति । तथाहि अशोक किंशुकादिभिः तरुभिः परिगतेयं लघुपर्णशाला । चतुर्दिक्षु-पुष्प फल-भरनताः लताः । गोमय लेपन-पूतं विरल-विकीर्ण-निवारकणं बहिरङ्गणम् । समीपे स्वच्छ नीरं स्नानीयं सरः । मध्ये धूमोद्गारिणी यज्ञवेदी । विश्वस्त-विचरणशीलाः तिर्यक् जातयः । ॐकार ध्वनि मुखरा आज्य-सुगन्धिनीयञ्च स्थली ।

रतिः— स्वामिन् । अस्य दर्शनेन स्वतः हृदये धर्मभावना स्फुरति । पाप वासना च विलीयते ।

कन्दर्पः— धूम-व्याजेन पापराशिः अस्मात् दूरी भवति, तस्मात् शान्तिदं हृद्यञ्च स्थानमिदम् । मह्यमपि एतद् भृशं रोचते ।

रतिः—स्वामिन् ! विहग-श्रेणी-रम्या अदूरवर्त्तिनी तटिनीयं का नामधेया ?

कन्दर्पः— इयं तटिनी नर्मदा नाम्नी । या विरचित-फेनस्मिता तरङ्गकरैः कल-कल-निनदैश्च आवयोः स्वागतम् ज्ञापयतीव प्रतीयते ।

रतिः— (सविस्मयं) अहो ! कलहंस-केलि-मधुरा इयं तटिनी तत् कूल-शोभि, मधुप-मधु-गुञ्जन-मनोहरं वञ्जुल कुञ्जञ्च मे मानसं आनन्दयति प्रह्लादयति विमुग्धी करोति च । तथाहि-

सुमञ्जुले वञ्जुल-कुञ्ज-पुञ्जे गुञ्जन्ति मञ्जु भ्रमरा भ्रमन्तः ।
कल्लोलिनी नील-जला न्तराले लीलायते लोल-मराल-मालः ।

कन्दर्पः— प्रिये ! सुनील-वनानी व्याप्त-दिग्वलये, हिन्ताल-तमाल-वकुल-बहुले, निकुञ्ज-पुञ्ज-सुमञ्जुले अतिमनोहरे एतत् तीरे वनलक्ष्मीः सजीवेव आभाति । यथाहि पश्य-

लसत् पलाशावलि-नील-वस्त्रा
फुल्लत्-प्रसून प्रकरा-च्छ-हासा ।
लोलद् विहङ्ग-स्वन-कम्रकण्ठा
विभाति रम्यात्र बनान्त-लक्ष्मीः ॥ ३

रतिः— सत्यम् । निसर्ग रमणीया प्रकृति लक्ष्मीः अत्र चित्तोन्मादिनी । स्वामिन् ! कस्य इदं सुरम्यं तपोवनम् ?

कन्दर्पः— इदं महर्षेः दमनस्य तपोवनम् । इदानीं पल्लव कुसुम-कल काकली रमणीयः वसन्तकालः समुज्जृम्भते तस्मात् समधिक मनोहरास्य प्राकृतिक शोभा- तथाहि—

कूजत् कुञ्ज कुटीर-कोकिल-कुलैर्दिक् चक्रमाकम्प्यते
चञ्चत्-चञ्चरकश्च-चूतमुकुलं चारूच्चरं श्चुम्बति ।
वातो वाति वने वरोरु ! बलयन् बल्लीर्वसन्तागमे
सङ्गीतं गगनाङ्गने च विहगा गायन्ति मुग्धा मुदा ॥ ४

रतिः— सत्यं स्वामिन् ! इयं वनानी किसलयकरैः तालं ददती, भृङ्ग-विहङ्गनादैः रम्यं गायन्ती । मलयानिलेन मधुरं नृत्यन्ती मानसं मोहयति ।

कन्दर्पः— प्रिये ! पश्य तावत् अत्र स्वभाव वैरतां विहाय इमे श्वापदाः कथं परस्परेषु स्निह्यन्ति ।

रतिः— (विलोक्य) स्वामिन् ! एतदेव किमस्य स्थानस्य माहात्म्यम् ?

कन्दर्पः— अथकिम् । प्रिये ! अन्यच्च पश्य—

वनस्पतीनां विटपान्तरेषु विराजिता चित्रनिभावि-राजिः ।
धूत्वाज्य गन्धिश्च तमाल-ताल-शमीर जालात् वहते समीरः ॥

रतिः— (मुखमवलोक्य) स्वामिन् ! इच्छामि अत्रावस्थाय एतस्याः प्रकृति कमनीयां शोभां उपभोक्तुं कियत् कालम् भवता सह ।

कन्दर्पः— तवाभिप्रायं पूरयितुं नैव शक्नोमि रते ! नैव शक्नोमि । यतोऽहं देवराजस्य आज्ञावहः तदादेशः अवश्यं पालनीयः ।

रतिः— (सभ्रूभङ्गं) देवराजस्य कः आदेशः ?

कन्दर्पः— (सचिन्तः) अस्ति विशेषः ।

रतिः— (साग्रहं) किं न कथयिष्यसि ?

कन्दर्पः—(सस्मितं) अपि वर्द्धते उत्कण्ठा ? तर्हि श्रूयताम् । महर्षेः दमनस्य तपोभङ्ग इति ।

रतिः— (भयं नाटयन्ती) किं कथयसि ? दमनमुनेः तपोभङ्गः ? स्वामिन् कथम् अकार्ये ते प्रबलाकाङ्क्षा, दुर्वारोग्रहः । अहन्तु अतीव भीताऽस्मि । मुखं मे शुष्यति, चित्तं मे भ्रमते हृदयञ्च वेपते, अये स्वामिन् किं न तव स्मृतिविषयिणी शिव तपोभङ्ग घटना ? अतः रक्षस्व मे अनुरोध । नात्मानं नियोजय संशयपूर्णे कर्मणि ।

कन्दर्पः— (सस्मितं) भीरु ! मा भैषीः । चिन्तय तावत् स एव देवदेवः महादेवः । परन्तु दमनमुनिः मनुष्यमात्रं किं तेन ? पश्य—

अमल-कमलनेत्रे ! चन्द्रचूड़ः सरोषाद्
विदलित-बल-दर्पं मामनङ्गं चकार ।
न भवति मम नाशो येन भूयोऽपि तस्मान्
मनसिज इति युक्तं नामधाता व्यधत्त ॥ ६

रतिः— अहं किन्तु बलवद् भीताऽस्मि ।

कन्दर्पः— (सस्मितं) जानामि अबलाः दुर्बलाः । तस्मात् त्वं भीता भवसि । अयि ! रते !भयं मा कार्षीः । आगच्छ मया सह । अहमेतस्य बल्ली-जाला-वृत्तस्य पादपस्यान्तरितः साधयिष्यामि ममाभिलषितं कार्यम् । (तौ अन्तर्हितौ) ।

(ततः प्रविशतः पूजासामग्रीभिः सह मेनका दमन मुनिश्च) ।

दमनः— मातः मेनके ! त्वं मम परिश्रमं लघू करोषि । प्रत्यहं पुष्पावचयेन । तर्हि आनय पुष्पभाजनं । येन निवर्त्तयामि परमकारुणिकस्य कृष्णस्य यथोचित्तं पूजाविधिम् ।

मेनका— अद्य प्रातः खलु चितानि एतानि विविधानि नयनाभिरामाणि कुसुमानि नयतु भवान् । (इति पुष्पभाजनं अर्पयति ।)

( नेवथ्ये )

कोऽध्येयः स्वात्मगो देवः किं कार्यं परमङ्गलम् ।
का काम्या जगतः शान्तिः किं लक्ष्यं परमं पदम् ॥ ७

दमनः— (आकर्ण्य) मातः शृणोषि ? अशरीरिणीं छन्दोमयीं वाणीं । या एव तव पथप्रदर्शिका वर्त्तते ।

मेनका— (साश्चर्यं) कुतः अयं सुललित-स्वरझङ्कारः ?

दमनः— सः मनसः अगोचरः । विभेषि किम् ?

मेनका— नहि, भवान् मे समीपवर्त्ती ।

दमनः — तर्हि गच्छ स्नानादिकं समाप्य स्वसौभाग्यदेवतां पूजय।

मेनका— भवान् पूर्वं पूजयतु परमहं पूजयामि।

दमनः — मातः ! भक्तिपूत-हृदयेन सौभाग्यदेवतामर्च्चय। अचिरेणैव भवदुःखं तरिष्यसि। दिव्यसुखं च लप्स्यसे। यतः—

परिष्कृता यस्य हृद-ब्ज-वेदिका
सुभक्ति पुष्पा वलिभिः सुसज्जिता।
परिप्लुता-प्रेम रसैर्निरन्तर
मवाप्यते तेन मनस्स्थ-देवता ॥ ७

विशेषतः मर्त्य वासिनः जननं केवलं तदुपलब्धये। नोचेत् जीवनं निष्फलं भवति।

मेनका— धन्याहं ईदृशं सुदुर्लभं आदेशं सदा शृणामि।

दमनः — अयि ! अधुना अस्मात् स्थानात् प्रयाहि। अहमेव पूजाविधिं करोमि (इति नयने निमालयति)।

मेनका — भवतु (प्रस्थिता)।

(रति कन्दर्पौ बहिरागत्य)।

कन्दर्पः— रते ! शुभावसरः खलु अधुना मम कार्यं सम्पादयितुम्।

रतिः— स्वामिन् ! ..........

कन्दर्पः — (हस्तमुत्तोल्य) तूष्णीं भजस्व। (धनुषि वाणसंयोगं नाटयन्) जयतु जयतु देवराजः। मम चेष्टया सह परिपूर्णा भवतु ते कामना।

रतिः — (भ्रूकुटी भङ्ग्या निषेधति)।

कन्दर्पः — जयतु जयतु देवराजः। ( इति वाणमोक्षं कृत्वा रत्या सह प्रस्थितः।

दमनः — (सहसा चक्षुषी उन्मील्य स्वगतम्) अहो किमद्य मानसं मे चपलायते। विक्षुब्धो भवति च। भक्तिर्नोदेति हृदये। स्फुरन्ति च पुनः पुनः कुविचाराः। अनिर्वचनीया दुर्भावनाः जाग्रति। पुलका-

यन्ते मे चाङ्गानि। हे भगवन्! का ते इच्छा? मया किञ्चिन्न ज्ञायते।

मेनका— (समागत्य मुखमवलोक्य च) अहो! भवतः मुखमण्डलं किमधुना शरन्मेघ पटल-छन्न-चन्द्रखण्डमिव निष्प्रभं विभाति? का चिन्ता सहसा आलोडयति ते चित्तम्?

दमनः— (सावष्टम्भं स्वगतं) किं कथयामि? (प्रकाशं) न हि किञ्चित्। मदीया पूजा परिपूर्णा। त्वमपि स्नानकार्यं समाप्य सौभाग्य देवतां पूजय। अहं गच्छामि पर्ण कुटीरम्।

मेनका— (भ्रूकुटीं समाकुञ्च्य) कथम्?

दमनः— वत्से! अनिर्वचनीया दुर्भावना मम चित्तं विकृती करोति। अतः अहं दुस्सहां शिरोवेदनां अनुभवामि। कामये तल्लाघवाय शून्य-स्थाने कियत् कालं विश्रमितुम् (इति उत्थाय प्रस्थितः)।

मेनका— (तमेवमनुगच्छन्ती) मान्य! किमुक्तं भवता? बलवती शिरो-वेदना?

( ततः पुनः प्रविशति रत्या सह कन्दर्पः )

कन्दर्पः— (उच्चैर्विहस्य) अयि! रते! दृष्टं त्वया मम क्रिया पाटवम्? तथाहि—

मनोमथ्नाति जन्तूनां यदुक्तं पूर्वसूरिभिः।
मन्मथ इति मन्नाम युक्तं किं न शुचिस्मिते॥ ८

रतिः— (सभयं) अहो! एतादृशि साहसिके कार्ये तवाभिलाषः? सत्यं तदा मे हृदयं कम्पित मासीत्।

कन्दर्पः— प्रिये! साहसिकेन कार्येण धन-यशः-सुखानि सुलभानि भवन्ति अलं वाक् प्रपञ्चेन। आगच्छ शीघ्रमागच्छ एतस्मात् स्थानात् यास्यावः। मम कार्यं नूनं सफलीभूतं। अत्रावस्थानेन महान् अनर्थः सम्भवेत्। (रति कन्दर्पौ पलायितौ)।

इति तृतीयदृश्यम्

# चतुर्थदृश्यम्

[पर्णकुटीर द्वारदेशे दण्डायमानः दमनः समीपे मेनका च]

दमनः— (आकुलं) मातः मेनके ! शीघ्रं रचय शयनीयम् । यतः क्षणमपि प्रतीक्षितुं नैव शक्नोमि । बलवती मे शिरोवेदना । (मेनका शय्यां रचयति मुनिः शेते ततः सा तन्मस्तकोपरि हस्तं चालयित्वा) ।

मेनका— (स्वगतम्) सहसा शिरोवेदनायाः कारणं किम् ? भवतु । कथा-प्रसङ्गेन प्रकटी भविष्यति (प्रकाशं) पितः किमात्मानं सुस्थतरं मन्यसे ?

दमनः— (स्वगतम्) अस्याः पल्लव-कोमलकर-स्पर्शेन पुलकितानि मे अङ्गानि । न्यूनी भवतीव मे वेदना । मनसि मे जायते कोऽपि विकारः । हे भगवन् ! कथमीदृशी भवति मे मतिः (विचिन्त्य) मन्ये अस्याः सानिध्यात् ईदृक् भावः जागर्त्ति मे हृदये (प्रकाशं) मातः ! अलं करस्पर्शेन सत्वरं गच्छ । स्नानं समाप्य सौभाग्यदेवतां पूजय ।

मेनका— लघुतरा किं शिरोवेदना ?

दमनः—वाढम्, किञ्चिद्न्यूना मे वेदना । त्वमपि याहि स्वकार्य-सम्पादनाय तत्परा भव ।

मेनका – भवतु, गच्छामि तावत् (प्रस्थिता) ।

दमनः– (स्वगतं) विश्वसृजः अपूर्वा सृष्टिः नारी । या एव पुरुषस्य हृदये प्रवाहयति प्रेम-मन्दाकिनीम् जीवयति च दग्धीभूतामपि चित्तगतां कामनाम् । यया मोहयति पुरुषस्य मानसं विधाता, सृजतीदं जगत् । तया हीनं पुरुषस्य जीवनं वृथा, प्राणाः निष्फलाः जननञ्च व्यर्थम् । नोचेत् गृहस्थाश्रमं कथं प्रशंसन्ते पुराण-महर्षयः ।

( शयनात् उत्थाय )

अहो ! गतात्र मेनका। शून्यमिदं पर्ण कुटीरं राजते च नीरवता। मनो गह्वरे लुक्कायिताः कामनाः एकैकशः उदयन्ति। मनो न स्थिरता मेति किं करोमि ? न किमपि मम प्रीतये। मन्ये केवलं जनयिष्यति प्रीतिं मैनकायाः अत्र उपस्थितिः भवतु शब्दापयामि तावत्—

( गवाक्षमार्गेण विलोक्य )

अहो ! सरोवरस्य नीलजले सुचपला बालेव इयं सखीतुल्यैः हंसीभिः सार्द्धं जलकेलि परायणा वर्त्तते ? मुकुलित-कवरीभारं उद्वहन्त्याः अस्याः आर्द्रं वसनं प्रभिद्य आलक्ष्यते अभिनवं यौवनम्। अधुना मधुरं अस्याः दर्शनम्। तथाहि—

एषा सरोऽभ्यन्तर सन्तरिष्णुः
प्रतप्त-कार्त्तस्वर-कान्त कान्तिः।
कादम्बिनी मध्य स्फुरद् विलोला
सौदामिनीव प्रतिभाति तन्वी ॥ १

भवतु अनेन मार्गेण पश्यामि अधुना अस्याः असंच्छन्नं यौवनम्।

(निरीक्ष्य) अहो ! इदृशी विभा ? एतादृशी कमनीया कान्तिः ? एवं विधं लोकोत्तरं लावण्यम् ? उत्तरली करोति ममेयं चित्तसागरम्। समेधयति मे आशा बल्लरीं। समुद्दीपयति च मे कामनाराजीः। अहं मन्ये—

लावण्य-लीला-प्रतिमा विशेषा
किं वा चलत्-काञ्चन कल्प-बल्ली।
मायामयी मानस-मोहिनी किं
लोकेश-लोकोत्तर-कल्पना वा ? ॥ २

( मेनका जलाञ्जलिं गृहीत्वा नयने निमील्य च )

मेनका— हे भगवन् ! अभीष्टदायिन् ! कदा गमिष्यन्ति मे दुःख-दिनानि ? कदा वा भविष्यति मे मनोवाञ्छा पूर्णा ? कदा मर्त्त्य जञ्जालात्

यास्यामि वा पारम् ? कदावा प्राप्स्यामि पुनरपि दिव्यलोकम् ?

दमनः— अहो ! उद्दाम काम-विकारस्य सम्पादिनीयम् । तथाहि—

स्तनाभ्यामानम्रा कमलवदना कुन्दरदना
घनैः केशैः कम्रा विपुल जघना चम्पकरुचिः ।
नव प्रेमोन्मत्ता ललितवचना लोलनयना
नवीनेयं कस्य व्यथयति न चित्तं सुकठिनम् । ३

(अस्मिन् काले एको हंस शावकः मेनकायाः वस्त्राञ्चले प्रविशति)

मेनका— (नयने उन्मील्य हस्ताभ्यां कोमलतया तं धृत्वा) अरे ! चपल ! मम ध्यानं त्वया प्रभग्नम् ? (स्मितं कृत्वा) किं मृणाल-खण्डानि भक्षयिष्यसि ? (मृणाल-खण्डं तन्मुखे ददाति) अरे ! चपल ! कथं मृणालखण्डं न भक्षयसि ? किं मातुः अङ्कं कामयसे ?

दमनः— (विलोक्य स्वगतं) अहो ! अस्याः कमनीयः कण्ठः, अनवद्या च मुखश्रीः किं बहुना ?

नेदं तदास्यं परिपूर्ण-चन्द्रः
स्मितं तदीयं न तदंशु-जालम् ।
लावण्यमेतन्न तदस्य कान्ति
स्तस्याः नवाणी क्षरिता सुधा सा ॥ ४

मेनका— अरे ! चपल ! अहमेव जलाञ्जलिं ददामि । त्वं दूरमपसर । (इति बलात् निवार्य पुनः जलाञ्जलिं गृहीत्वा नयने निमीलयति ।)

दमनः— (एक लयेन पश्यन् स्वगतं) अहो ! अस्याः मनोहरा मुखश्रीः, कुञ्चित कृष्ण कुन्तलं, चपले नयने, पल्लवरक्तौ अधरोष्ठौ, सुकोमलौ बाहू, ललिते भ्रुवौ, पृथुलौ स्तनौ, सुललितं कण्ठं मनोज्ञा कान्तिः, लोकोत्तरं लावण्यम्, कं नाह्लादयति ? नाप्याययति ? न मुग्धी करोति ? किं बहुना—

नूनं पुंसो भवति सफलं जन्मतस्येहलोके
पुण्यार्होऽसौ जगति निखिले शर्मभाक् भाग्यवांश्च
स्वीये क्रोडे चपलनयनां काम-सौख्य-प्रदात्रीं
धृत्वे मां यः प्रणय सहितं यापयिष्यत्यहानि ॥ ५

(कुटीरात् वहिर्निर्गत्य स्वगतम्) प्रमदा परिपूर्णा लतिकेव पुरुषस्य हृदयक्षेत्रमलं करोति। यस्याः दर्शनं वीजायते, स्मरणं अङ्कुरायते प्रणय-निबन्धनं पर्णायते, प्रेमालापः कोरकायते, विलासभङ्गिः पुष्पायते हृदयार्पणं फलायते। ततः पुरुषजीवनस्य परिपूर्त्तिः शाश्वती शान्तिः................ (वद्धाञ्जलिः सन् आकाशे दृष्टि दत्वा)।

हे भगवन्! त्वमेव वाञ्छा-कल्प द्रुमः, त्वमेव परम कारुणिकः। त्वमेव प्राणिनां आर्त्तिहारी। त्वमेव अन्तर्यामीति लोकेषु प्रथितः। तर्हि इयं हि—

पृथुस्तनी चन्द्रमुखी सुमध्यमा
जवाधरा, कुञ्चित-नील कुन्तला।
विलोलनेत्रा ललिता शुचिस्मिता
मदीय वक्षः किमलं करिष्यति ? ६ ॥

(कुटीरमागत्य सभ्रूभङ्गं) विशेषतः श्रूयते संसारेऽस्मिन् नारी महार्घं रत्नम्। स्वयं विधात्रापि स्वतः इयं प्रदत्ता। परन्तु अति-मूढेन मया दीन-कर-गत-रत्नमिव निराकृतम् (दीर्घं निःश्वस्य) पराशर-व्यास-वशिष्ठादयः किं न पत्नीं गृहीतवन्तः ? ते किं न मुक्ति लेभिरे ?

(विचिन्त्य) तर्हि इमामेव करोमि स्वार्द्धाङ्गीम्। यतः अस्याः अनवद्यं रूपं विलोक्य जागर्त्ति मे मनसि इयं कामना—

इमामङ्के धृत्वा कमल-वदनां पर्ण-सदने
मनोमुग्धीकृत्य प्रणय-वचनैश्चाति मधुरैः।

सदा पायं पायं तदधररसं निर्जित-सुधम्
महोल्लासैर्नेष्याम्यपरिमितकालं क्षणमिव ॥

( नेपथ्ये )

कोऽध्येयः स्वात्मगो देवः किं कार्यं पर-मङ्गलम् ।
का काम्या जगतः शान्तिः किं लक्ष्यम् परमं पदम् ॥

दमनः— (प्रकृतिस्थः) अहो ! अयं स एव श्रुतपूर्वः ध्वनिः मे हृदय-तन्त्रीं प्रकम्पयन् आस्ते ?

मेनका — ( स्नानोनन्तरं पर्णकुटीरमागत्य ) मान्य ! किमुपशमा भवतः शिरोवेदना ?

दमनः — (भावं गोपयन् ) अथ किम् । लघुतरा संजाता मे शिरोवेदना ।

मेनका— तर्हि उत्तिष्ठ मया संगृहीतानि कानिचित् फलानि भक्षय । (इति फलानि उपहरति ) ।

दमनः— (स्वगतम्) नूनं इयं मे प्रणयिनी । नोचेत् एनां प्रति कथं मे मनसि ईदृशी वासना ? विशेषतः अस्याः दर्शनेन हृदयं मे स्फीतं भवति । तत्र नवीना-कल्पना स्तरङ्गा-यन्ते । एनां विना किञ्चिन्न आनन्दाय कल्पते मम । सर्वं च विषकल्पं प्रतीयते (प्रकाशं) वत्से ! अधुना मे बुभुक्षा नास्ति ।

मेनका – अद्य प्रातरेव किञ्चिन्नाश्नाति भवान् । अनुरूध्यते एतानि फलानि भक्षयतु ।

दमनः— वत्से ! समागतः मध्याह्नः । स्फुलिङ्ग कल्पान् किरणान् किरति दीप्तो भास्वान् । सवेगं प्रवाति तप्तानिलः । आतपे सन्तापिनी वसुमती म्लानीभूतानि च तरुलता-पर्णानि । मुहुर्मुहुः कर्णगोचरी भवति विहङ्गानां करुण-कूजनम् । तर्हि त्वमपि समाप्ताह्निका कानिचित् फलानि भक्षयित्वा प्रच्छाय शीतले तले विश्रम इति ।

इति चतुर्थदृश्यम् ।

# पञ्चमदृश्यम्

( पर्णकुटीरे शय्यामधिष्ठितः दमनः)

दमनः— (स्वगतं) अहो ! तस्याः रूपसम्भारं मे मानसम् आलोडयति विकृतीं करोति च । सर्वं जगत् विषमयं प्रतीयते । किं करोमि ? निद्राऽपि न आयाति । यद् भावि तद् भवतु । अकिञ्चनः किं लब्धं काञ्चन खण्डं क्षिपति ? तर्हि ऐहिकीं जीवनयात्रां निर्वाहयामि चारुहासिन्या अनया सह । (परितो विलोक्य) गतः मध्याह्नः । सूर्यस्य किरणः क्रमादेव हीयते । मलयानिलः मन्दं मन्दं वाति । परितः स्निग्धं शान्तञ्च दृश्यते । तर्हि आह्वयामि तावत् मेनकां (प्रकाशं) मेनके ! मेनके ! अत्रागच्छ ।

मेनका – अयमहम् आगच्छामि (पार्श्वमुपेत्य) पितः ! किं निमित्तम् आहूताऽहम् ?

दमनः— मेनके !......... (मुखं व्यावर्त्तयति) ।

मेनका — (भ्रूकुटीमुत्तोल्य) पितः ! कथं किञ्चिन्न सम्भाषते ?

दमनः— संभाषे ........... क्षणमपेक्षस्व ।

मेनका — (स्वगतं) कथं मुखभङ्ग्याः विकृति भवति वाक्यं च न स्फुरति कण्ठात् (प्रकाशं) कथय ।

दमनः — मेनके ! यदि मनसि किञ्चिन्न विभावयसि तर्हि कथयामि ।

मेनका — कथय पितः ! कथय न किञ्चिद् विभावयामि ।

दमनः— (मुखमवलोक्य) अयि !

कूजद् विहङ्गं विकसत्तमालम्
गुञ्जद् द्विरेफं प्रलसत्-प्रसूनम् ।

क्रीडत् कुरङ्गञ्च वहत्-समीरं
विहर्त्तुमिच्छामि वनं त्वयैव ॥ १

मेनका — (मुखं व्यावृत्त्यान्तर्विहस्य च) (स्वगतं) मन्ये ! सुरेन्द्र प्रेरितः कामः पूर्णकामः। भवतु तूर्णं गच्छन्तु मे शाप दिनानि (प्रकाशं) पितः किमद्य असम्बन्धं अभिधीयते ?

दमनः — (उत्थाय) कस्तावदसम्बन्धः ? सुसम्बन्ध एष एव स्यात् । आगच्छ मया सह । (ग्रहीतुं हस्तौ प्रसारयति) ।

मेनका — (मुखं विकृती कृत्य) न...... नहि......

दमनः — (सस्मितं) किं बिभेषि ? लज्जसे वा ? आगच्छ मया सह (इति बलात् करे धृत्वा नयति) ।

मेनका — (स्वगतं) हे भगवन् ! अपार-करुणा ते मयि (प्रकाशं) कुत्र गच्छावः ?

दमनः—कानन मध्यवर्त्ति तमालादिभिस्तरुभिः समुल्लसितम्, विकच-सारस सौरभ-युतं, खग-कल-काकली पूरितं, वनलक्ष्म्याः विलास स्थलमिव शोभमान सरसस्तीरम् ।

मेनका — (स्वगतं) देवराज ! मह्यं मतिं देहि । धृतिं देहि । येनाहं साधयिष्यामि भवन्मनोरथम् । (प्रकाशं) कथमावयोस्तत्र गमनं भवेत् ?

दमनः— ज्ञास्यसि पश्चात् । अयि पश्य तावत्—

रसाल-हिन्ताल-तमाल-मालान्
उदुम्बर-श्रीफल-नारिकेलान् ।
सुनील-वानीर-शमीर-तालान्
विशाल-साल-त्वचिसार-जालान् ॥ २

मेनका— अये ! कियद्दूरं तत् सरसस्तीरम् ?

दमनः— अयि ! क्लान्तासि किं ? तर्हि अस्मिन् शिलातले उपविश पश्य च वासन्तीं वन शोभाम्—

भ्रमन्ति गुञ्जन् मधुपा निकुञ्जे
मुञ्चन्ति पुष्पाणि लताः समन्तात् ।
कूजन्ति तारश्च पिका रसाले
प्राह्लादयत्याशु मनो वसन्तः ॥ २

मेनका— अहो ! अनुत्तमा रमणीयता वसन्तस्य ? यस्य स्पर्शेन समुद्भिन्न-पल्लवाङ्कुरा पुलकिताङ्गीव आभाति इयं वनभूमिः । नीलिम्ना च गगनम् उपहसतीव प्रतीयते ।

दमनः— (सस्मितं) वस्तुतः निसर्ग-रमणीया इयं वासन्ती शोभा त्वद्विधेव मे नेत्राह्लाददायिनी ।

मेनका— (लज्जाधोमुखी तिष्ठति) ।

दमनः— (कराग्रेण मुखमुन्नमय्य) अयि ! शुचिस्मिते ! किं चिन्तयसि ? पश्य तमाल-श्यामलां प्रकृति-सुषमां ।

मेनका— (सभ्रूभङ्गं निषेधं सूचयन्ती कानिचित् पदानि गत्वा) पितः किमेतत् ?

दमनः— (तामनुगच्छन् विहस्य) अयि ! चारुहासिनि ! आर्यपुत्र इति मां सम्बोधय । न पितः, यतः त्वमद्य अधिका विभासि । तव रूपम् मनसि मेऽद्य भावान्तरमाविष्करोति ॥ (सहसा पटान्तं केशान्तञ्च अवलम्बते ।)

मेनका— (मुखं विकृती कृत्य) अये ! किमेतत् ? किमेतत् ?

त्यजतात्त्यजतान्ममाञ्चलं लुलितां केशततिं यतीन्द्र ! मे ।
कथमद्य भवान् प्रयात्यधः स्थितप्रज्ञ ! स्मरतात् कुचेष्टितम् ॥

दमनः— (सस्मितं)

अयि ! सुन्दरि ! चारुकुन्तले ! नहि केनापि मम प्रयोजनम् ।
तव सङ्गसुखं सुमध्यमे ! मम काम्यं सुविलोल लोचने ! ५

मेनका—अये ! यतीन्द्र ! एतत् किं ते युक्तम् ? त्वमेव आबाल्य-ब्रह्मचारी ?

दमनः— सुन्दरि ! तव रूप मोहितः किञ्चिन्नैव निश्चिनोमि । अधुनाहं कामचारी संजातः ।

मेनका — (सकरुणं) त्वं दमन इति आख्यां वहसि । तर्हि कथं ते ईदृशी असंयमता ?

दमनः— नामाक्षर सामञ्जस्यात् मदनः मां विकृतीं करोति ।

मेनका — अये ! त्वं कृष्णस्य परम भक्तः ?

दमनः— सुन्दरि ! स कृष्णोऽपि रक्तः ।

मेनका — सः कृष्णः "हृषीकेश" इति निगद्यते । तर्हि कथं ते ईदृशी धर्म-हीना मतिः ?

दमनः—अयि ! तथापि स एव राधिकेशः, काम जनकश्च इति आख्यायते ।

मेनका— अये ! यतिराज ! पश्य तावत् तव स्खलनं विलोकयन् विलज्जितोऽयं दिवाकरः मेघवसनैः मुखं संगोपयति ।

दमनः— नहि नहि सोऽपि कामोन्मत्तः कान्तां छायामालिङ्गति ।

मेनका — (निषेधं सूचयन्ती) अन्यच्च पश्य—इयं सरसी विलोल-वीचि-करैः निवारयतीव । इयं वनानी अपि पल्लव-कर-चालनैः पक्षि-हुङ्कृतैश्च निषेधं व्यञ्जयतीव । तर्हि हे यतीन्द्र ! अहं स्खलित कवरी विगलद् वसना च संजाता । अतो मां त्यज त्यज माम् ।

दमनः— (परित्यज्य) भवतु, शीघ्रं संयोजय ।

मेनका— (स्वगतं) अहो ! लब्धावसरा अधुना प्रधावामि, पश्यामि तावद् मामनुधावति नवा?। यतः निषिद्धे वस्तुनि एव जनानां अभिरुचिः प्रवर्द्धते (इति धावति)।

दमनः— (तामनुधावन्) अयि ! प्रियतमे ! कण्टकाकीर्णोऽयं पन्थाः । अतः प्रधावनात् विरम विरम, यतस्त्वया—

कल-नूपुर-राजिभिः सुकम्रौ सुघना-लक्तक लेपनै र्मनोज्ञौ ।
ललितावति कोमलौ च रक्तौ चरणौ ते न कदापि पीडनीयौ ।।

मेनका— (स्वगतं) अहो ! घन-तरु-लता पर्ण-प्रसून-फल प्रशोभिता मनोरमा स्थलीयं। अत्र नैव द्रष्टुं शक्नोति मम कलेवरम्। तर्हि निकटे लताकुञ्जे अन्तर्लीना पश्यामि अस्य भावातिशयम्। (इति लताकुञ्जे प्रविशति)

दमनः— (परितो विलोक्य) अयि ! सुकुन्तले ! मेनके ! क्व गताऽसि ? क्वगताऽसि ?

नवीन-विस्रम्भ-विमुग्ध-चित्तम्
प्रिये ! प्रियेणालप चारुनेत्रि !
सदा सदाचार-युजो यतो मे
मनो मनोज स्तरली करोति ।। ७

मेनका— (स्वगतं) स्मर-शर-प्रहार खिन्न हृदयोऽयम् अधुना उन्मादग्रस्तश्च नास्ति स्तोकमपि ज्ञानम्। भवतु पश्यामि किं करोति इति।

दमनः— अयि ! मुग्धे ! त्वं मम दुःखान्धकारस्य दीप्तिमयी आलोक-वर्त्तिका। हृदय कासारे रम्यगन्धा पद्मिनी। प्रेम पारावारस्य सुविमला ज्योत्स्नाधारा, कामानलस्य सुशीतला वारिधारा, शान्ति-दायिनी निकुञ्ज-भूमिश्च।

मेनका — (स्वगतं) अहो ! प्रेम-गर्भितं अस्य वचनं श्रुत्वा मम हृद्भावं विवरितुं अक्षमा भवामि । तर्हि भवतु परिपूर्णा महेन्द्रस्य कामना । मामापि गच्छन्तु च तानि दुःख-दिनानि । (लताकुञ्जात् बहिर्निर्गत्य प्रकाशं) हे यतीन्द्र ! त्व मदीयमिदं शरीरं रक्षितवान् राक्षस कवलात् । तर्हि त्वां किञ्चिन्नैव कथयामि । यथा ते रोचते ।

दमनः — (सोत्कण्ठं) मेनके ! क्व गताऽसि ? क्व गताऽसि ? (हस्ते गृहीत्वा) अस्मिन् चराचरे जगति यानि वस्तूनि अस्मन्नेत्रगोचराणि भवन्ति तानि निष्फलानि उपभोगं विना ! अयि लोल नेत्रि ! तर्हि आगच्छ फुल्लत् पुष्प-प्रकरं, वल्ली-निकुञ्ज-सुरम्यं, मधुप पुञ्ज-गुञ्जन-मनोहरं, लता-मण्डपम्, (इति हस्ते धृत्वा नयति) ।

मेनका — ( स्वगतं ) हन्त ! विधि प्रतिकूलानां ईदृशीदशा सम्पद्यते ? तथाहि—

आशैशवाद् ब्रह्मपरायणोऽपि
प्रविद्धमर्माय मनङ्गवाणैः ।
संसार-मायाब्धि-निमज्जितानाम्
महो ! कथा का विषयान्वितानाम् ॥ ७

(प्रकाशं) वस्तुतः अतीव मनोरमा कुसुम-सुषमायिता इयं स्थली नयनाकर्षिणी भवति ।

दमनः — अयि ! सुवदने ! पश्य, वसन्त लक्ष्मीः सर्वेषां चेतांसि विमोहयन्ती ललित ललनेव अत्र लीलां रचयति । तस्याः पाद नूपुरोपमम् मधुकरगुञ्जनं चित्तं विमोहयति च ।

मेनका — समीरस्पर्शेन ईषल्लोलमाना पुष्पालङ्कारालंकृता इयं मल्लीवल्ली राजनर्त्तकीव प्रतीयते । तस्याः मुकुलेषु अलब्ध तोषं मधुपं मधुमत्ता इयं माधवी लता दर-मुकुलित-कुड्मलैः स्मितं रचयन्ती-पल्लव-करैः आह्वयतीव ।

दमन: — अत्रत्य दृश्यं कस्य मनोमुग्धकारि न भवति ? अन्यच्च पश्य

सारङ्ग-वाहिनी-भूभृद्-वाजि-राजि-विराजिता ।
राजधानीव भातीयं भूः भूरि-भोगि-सङ्कुला ।। ९

मेनका — सत्यमेतत् अत्र समलंकृत सर्वाङ्गो प्रकृति-वधूः मे मनः नितरां आह्लादयति ।

दमन: — अयि ! पश्यसि प्रफुल्ल-मल्लिकायां कथमुपविशन्ति चटुलाः मधुकराः । रसाले कथं कुहूरवं मुहुः कुर्वन्ति मदकलाः कोकिलाः । पुष्पेभ्यः पुष्पेभ्यश्च कथं गृह्णन्ति मधूनि सुचपलाः मधुमक्षिकाः ?

मेनका — (सहर्षं) पश्यामि । परन्तु अत्रस्थानि मल्लिका कुसुमानि मे मनः नितरां हरन्ति ।

दमन:— (गत्वा कानिचित् मल्लिका कुसुमानि चिन्वन् आनयति )

मेनका— (पुष्पेभ्यः हस्तं प्रसारयति).।

दमन:—(सस्मितं) तव हस्ते नैव दास्यामि । एतानि तव विलुलित कवर्यां मण्डयितुं इच्छामि ।

मेनका— (स्मितं कृत्वा) नहि ... ........... !

दमन:— (मुखमुत्तोल्य) ललिते ! मम प्रणयं न रक्षिष्यसि ?

मेनका— (सस्मितं) का गतिः ? यत् इच्छसि तत् कुरु ।

दमन:— (पुष्पाणि अलंकृत्य) अयि ! मल्लिकालंकृता ते विलुलिता कवरी अधुना तारकितं गगनं जल बुद्बुद समाकुलां कालिन्दीञ्च तिरस्करोति तवरूप सम्भारः मनसि मे जनयति नवीनामुन्मादनाम् (कराग्रेण मुखमुत्तोल्य) ।

सुचिकुरो-वत ! ते नव नीरदः
सखि ! मुखं परिपूर्ण-सुधाकरः ।

स्तनुरुचिः कनकश्च घटौ स्तनौ
भुज युगं च बिसं नलिने पदे॥ १०

मेनका— (अधोमुखी तिष्ठति)।

दमनः अयि! सुमध्यमे! पश्य पश्य अमन्द गन्धवहोत्थित-तुङ्ग-तरङ्ग-भङ्गि-समाकुलं, विकच कुमुद कह्लार राजीव-राजि-मनोहरम्, उन्मद-कलहंस-कलध्वनि कलकलम्, जलचर निकर कृतजल संचालनं, सुरम्यम् अनतिदूर सरोवरम्।

मेनका— (विलोक्य) अहो! मन्द-गन्धवह-दोदुल्यमानाः गुञ्जन् मिलिन्दाः अरविन्द-वृन्दाः सञ्चारयन्ति मनसि मे नवीनानन्दम् (सस्मितं) तर्हि एकं मह्यं प्रदातुं शक्नोषि किम्?

दमनः— (सस्मितं) किं ते भविष्यति?

मेनका— (सलज्जं सस्मितं च) अहं तस्य रमणीयं सौरभम् आघ्राय दिव्यां शोभां च विलोक्य कृतार्था भवेयम्।

दमनः— (समीपमुपसृत्य चूर्णकुन्तलमुत्तोल्य) अयि! प्रियतमे! इयं तव चित्तगता इच्छा। तर्हि ममेच्छाम् आकर्णय—

मन्दानिला-पतित-केशलता-निमज्जो
गण्डस्थलस्य सुभगे! मम चुम्बनेच्छा।
वासोऽपहर्तुमचिरात्तव नीविबन्धात्
मां मेनके! मनसिज श्चपली करोति॥ ११

मेनका— (अशृण्वती) अहो! पश्य इयं वानरी कथं यूथ-भ्रष्टं स्वार्भकं हृदि निधाय मातृस्नेहार्द्रहृदया चुचुम्बते।

दमनः— (सस्मितं) किं जननी भवितुं कामयसे? या न जाया सा कथं लभेत जननीपदम्।

मेनका — (अधोमुखी) ममानुरोधं न पूरयिष्यसि किम् ?

दमनः—(समुपसृत्य) अभिमानिनि ! तव निःसर्ग रमणीयस्य वदनस्य पुरः कमलस्य श्रीः का ? तर्हि कथं ते निर्बन्धः ?

मेनका — (सस्मितं) तव प्रणयानुबन्धम्..........

दमनः — अयि तव कण्ठ स्वरस्य सुललित झङ्कारः मानसं मे तरलयति, प्रमोदयति, प्रोन्मादयति च (करयुगलेन मुखमुन्नमय्य)।

तवाधरं रम्य-मुदार शीले ! नूनं हि पीयूष-रसेन पूर्णम् ।
तन्मार्ग सम्भूत वचांसि नोचेत्
कर्णेषु वर्षन्ति कथं सुधीघान् ।। १२

मेनका — (लज्जाधोमुखी भूमिं नखेन विलिखन्ती स्वगतम्) धन्यः कन्दर्पः ! धन्या ते चेष्टा, यत्त्वं संयमिनमपि अधः नयसि ।

दमनः— अहो स्वेदजलाक्तम् आपाटलं ते मुखम् अधुना नीहारबिन्दुयुक्तं कमलं विडम्बयति । किं लज्जसे ? भवतु इतः गच्छामि ।

मेनका — (स्वगतं) अहो प्रेम्णः माहात्म्यम् ? आकीट कैटभारिं यावत् सर्वे तस्याधीनाः ।

दमनः— (कानिचित् पदानि गत्वा एकं चम्पकपुष्पं हस्ते गृहीत्वा) (सस्मितं) ।

वर्णत्रयेण प्रथिताभिधानमाद्यन्त वर्गाक्षरयुक्तरूपम् ।
लभेत ते कम्रतनूपमानं वक्तुं समर्थाऽसि किमस्ति हस्ते ? १३

मेनका— (स्मितं कृत्वा) यद्यहं कथयिष्यामि ?

दमनः— (सस्मितं) जानामि त्वं बुद्धिमतीति, यदि स्खलनं सभवेत् ?

मेनका — (सस्मितं) तर्हि किम् ?

दमनः— अहं यत्... ..... वदामि ।

मेनका — (सस्मितं) भवतु, तत् चम्पकम् ।

दमनः— (समीपमुपसृत्य) शोभनं शोभनं त्वयोक्तम् । (पुष्पं मेनकायाः अर्पयति ) ।

मेनका — (अधोमुखी तस्य पत्राणि गणयति) ।

दमनः— (मेनकायाः हस्तौ गृहीत्वा) अयि ! शुभाङ्गि ! पश्य, चपलां कुरङ्गीं कथमवलेढि मदमत्तोऽयं कुरङ्गः । मकरन्द-पान मत्त भ्रमरः कथमनुसरति भ्रमरीं । कोकिला रवमाकर्ण्य कथमनुकूजति तारं कोकिलः । अयि ! प्रिये ! सर्वं जगत् प्रेममयम् । तर्हि किं न ज्ञातुं पारयसि मम मनो व्यथाम् ?

(शिलातले उपविश्य) अयि !

विभूषयाङ्कं मृग शाव-लोचने !
कुचा-चलौ ते हृदि संनिधेहि मे ।
सुवाहु पाशेन दृढं वधान माम्
भ्रुवौ समाकुञ्च्य च किञ्चिदालप ॥ १४

मेनका— (लज्जाधोमुखी तिष्ठति) ।

दमनः— (स्वासनात् उत्थाय समालिङ्गय स्वाङ्के निवेश्य च) अयि ! प्रियतमे !

अमन्द-मोदार्णव-चारु-चन्द्रिका
तडिल्लता त्वं नव-कल्पना-घने ।
प्रफुल्ल-वल्ली मम चित्त-कानने
विषाद-मर्वच्छ-जला-तरङ्गिणी ॥ १५

( नेपथ्ये )

रे पाप ! कामान्ध ! कुमार्ग-गामिन् !
रे मूर्ख ! पापिष्ठ ! विवेकहीन !
असंयमिन् ! रे विषयाभिलाषिन् !
धिक् त्वामकार्येण न लज्जसे त्वम् ॥ १६

दमनः— (उत्थाय साश्चर्य परितो विलोक्य) अहो ! कर्कश कण्ठध्वनि: ? को वा मां भर्त्सयते ? (ततः प्रविशति राक्षसः) ।

राक्षसः— (स-प्रगल्भं) रे रे कुमार्गचारिन् ! किमेतत् तपसः फलं, सत्यस्य परिणामः ? ब्रह्मचर्यस्य पराकाष्ठा ? मया केवलं दुष्कृत आचरित न किं त्वया ?

रे विषयान्वेषिन् ! यतिरिति अभिधीयसे, परन्तु क्वास्ते ते इन्द्रिय संयमता ? क्व गता वा ते सद्विवेकता ? क्व वा ते सद्धर्म परायणता भवतु अस्य फलमचिरेणैव अनुभविष्यसि । अनुताप-ज्वलनश्च दन्दहिष्यति (प्रस्थितः) ।

मेनका— (सभयं) आर्यपुत्र ! परित्रायस्व मां दुष्ट-राक्षस-कवलात् (इति आलिङ्गति) ।

दमनः—(स्वगतं) अरे ! अयं स एव राक्षसः यमहमभिशप्तुं प्रोक्तवान् (सावष्टम्भं) मेनके ! भयं मा कुरु । प्रस्थितः स दुष्टोऽधुना । नास्ति भयस्यावकाशः । स्थिरचित्ता भव ।

मेनका— नहि नहि आर्यपुत्र ! मां परित्रायस्व मां परित्रायस्व (इति बलात् आलिङ्गति) ।

दमनः— अधीरे ! मयि सति का शक्तिरस्ति तस्य दुरात्मनः तव छायामपि स्प्रष्टुं ?

मेनका—(परित्यज्य) एनं दुरात्मानं प्रेक्ष्य मे हृदयं वेपते । मनसि दुर्भावना समुदेति । पदभ्यां चलत्-शक्तिश्च विलुप्यते । किं करोमि ?

दमनः — भीरु ! मा विभीहि । भीतिस्तु हृदयविकृतिः । न जानासि किं मे तपोबलम् ? एवं विधान् शतशः राक्षसान् युगपत् भस्मीकर्त्तुं शक्नोमि का कथा तु एकस्य ? (हस्ते गृहीत्वा) अयि ! समागतः सन्ध्याकालः । आगच्छ । अस्मद् पर्ण-कुटीरं यास्यावः ।

मेनका— (सधैर्य्यं) भवतु गच्छाग्रतः ।

दमनः— (कियद्दूरं गत्वा) अयि ! प्रिये ! पश्य तावत् पश्चिमाशाम् ।

मज्जत्-सुरक्त-रवि-कुङ्कुम-चारु भाला
लोलद्-विहङ्गम-कला कमनीय-कण्ठा
फुल्लत्-पलाश-सुकुमार-सुरम्य वस्त्रा
कान्तेव मानसहरा सखि ! पश्चिमाशा ॥ १७

मेनका— अस्तमितस्य प्रभाकरस्य प्रभापुञ्जं श्यामल वनानि रञ्जयति । नील गगने उड्डीयमानानां विहङ्गमानां कलध्वनयः दिङ्मुखानि वधिरयन्ति । कुसुमसौरभवाही मृदु-मन्द समीरणः गुल्म-लता-तरूणां लास्यमुपदिशन् लीलायते । अधुना निखिलं अरण्यं रमणीयतरं विभाति ।

दमनः— मेनके ! आवां बहुदूरमागतौ । संकीर्णोऽयं मार्गः कण्टकाकीर्णश्च तर्हि शनैः पदं विन्यस्य आगम्यताम् ।

( नेपथ्ये )

को ध्येयः स्वात्मगो देवः किं कार्यं परमङ्गलम् ।
का काम्या जगतः शान्तिः किं लक्ष्यं परमं पदम् ॥

मेनआ— (सभयं) अये ! अयं स एव ध्वनिः ?

दमनः— (सधैर्यं) अरे ! स एव ध्वनिः सदा मां सत्पथाय उपदिशति, प्रचोदयति च । परन्तु मयातिकामार्त्तेन किं न कृतम् ? अद्य मम द्वादशवर्षाधिक तपांसि विनष्टानि । अहो ! मम ईदृशं अधःपतनं

जातम् । भवतु इमाः सर्वाः विधातुरिच्छाः ॥ स्वयं जगदीश्वरोऽपि न शक्ष्यति लंघयितुं नियमं नियतेः । किमुत मानवाः ? (प्रकाशं) मेनके ! चिन्तां परिहर । नास्ति स्तोकमपि भयस्य कारणम् ।

मेनका— अये ! कियद्दूरेऽस्माकं पर्णकुटीरम् ।

दमनः— इतः किञ्चित् दूरे ।

मेनका— (सोद्वेगं) अये ! यतीन्द्र ! शीघ्रं शीघ्रं गच्छ । अधुना रविः चरमाचलचूडामतिक्रमते । दूरदिग्वलयादेव मन्दमन्दं सञ्चारिणी यामिनी कामिनी स्वकीयं कृष्णां शुकं शनैः शनैः आतनोति । नीडं प्रत्यावर्त्तमानाः विहङ्गमाः कलं कूजन्ति । पल्वलात् समुत्तीर्य कटू शब्दायमानाः आरण्य वराहाः स्व-स्व-वासाय निवर्त्तन्ते । निशाचराणां घोर-घर्घर नादाः कर्ण-विवरं रुन्धन्ति । वनमृग्याः आर्त्तचित्कारः सिंहस्य घोरगर्जनञ्च मनसि शङ्कां जनयति। आगतां रजनीं वीक्ष्य चक्रवाक् वधूश्च करुणं रटति ।

दमनः— मेनके ! अद्य मम नियमाचरणे महान् विलम्बः जातः । किमधुना करोमि ? (परितो विलोक्य) अहो ! घनान्धकारः शनैः शनै धरामालिङ्गति । नीला वनराजिः तत्र क्रमशः लीयते । फुल्लत् पुष्पाणां सौरभं समधिकमामोदयति । दूर कासारेषु कलहंसानां कलध्वनयः कर्ण-कुहरेषु मधुधारां वमन्ति । सौरभहीनानि कमलानि मलिनी भवन्ति । गन्धवहः मन्दं मन्दं वहन् प्राणान् पुलकितान् करोति । (गगनंविलोक्य) अयि ! प्रिये ! पश्य पश्य कथमुद्भासन्ते नभोमण्डले तारका ततयः । मन्ये—

नीलाम्बुराशौ मिहिरे निमग्ने
निशाङ्गना-ध्वान्त-मनोज्ञ-वस्त्रा।
विमुच्य कृष्णां कवरीमभूत् किम्
विकीर्ण-तारा सित पुष्प-पुञ्जा ॥ १८

मेनका — आर्यपुत्र ! अहमतीव क्लान्ता । पदयोर्मे गुरुतरा वेदना । अतः श्रमलाघवाय कथामेकां भणतु ।

दमनः— भवतु । समीचीनमेतत् । अवहिता भव ।

मेनका— अवहिताऽस्मि ।

दमनः— तर्हि शृणु, अस्ति आर्यावर्त्त-किरीटायमानस्य हिमवतः गङ्गोत्री स्रोतसः निःसरन्ती भारत-जनन्याः कण्ठगता हारलतेव, हरिदङ्गनायाः धवल-चपल चेलाञ्चलेव, गगन समुदितानां द्युतिमतां ज्योतिष्कमण्डलीनां स्फाटिकमणि मुकुर-श्रीरिव समुद्भासिनी । कपिलमहोदग्धानां सगरतनयानां परम-पद-प्रदर्शिनी, नवोढेव कान्ता वेगवती, मानिनीव विरचित-वीचि-भ्रूभङ्गा, प्रगल्भेव संदर्शिता-वर्त्तनाभिगह्वरा, मन्दहासिनीव मोहित-मुनि-मानसा, प्रणयिनीव विरचित-फेन-स्मिता, अनुरागिणीव विहग कुल कला-लापिनी, रत्या सक्तेव मुकुलित शैवालकच-कलापा, रसिकेव कलहंस कल-शिञ्जित-मञ्जुला, पद्मिनीव फुल्लत्-सारस सौरभवती, सावित्रीव ईशाह्लाददायिनी, जानकीव परिपूतजनकान्वया, उन्मद मदनेव स्खलित गतिः, सतीव स्वच्छहृदया, कुलटेव कुटिला, कोपनेव घोर घर्घर-नादिनी कल्लोलिनी मन्दाकिनी नाम ।

मेनका— (अपवार्य सभयं) अये ! किमेतत् अस्मत् पुरतः सधूम वह्निशिखा आलोक्यते । श्वापदानां आर्त्तचित्कारश्च द्विगुणी भवति ।

दमनः— (विलोक्य स्वगतं) विसारि-धूम-कवरीम् उन्मोचयन्ती शिखा-जिह्वाभिः वनराजिं पुनः पुनः लिहन्ती , तिरश्च्मात्तरवैरट्टं हसन्ती । किमियं वनचण्डिका ? (प्रकाशं मेनके ! विभेषि किम् ? एषः दावानलः कदा कदा अस्मिन् वनभागे प्रकाशते ।

मेनका— (सभयं) पश्य इमे श्वापदाः अधुना वैरीभावं परित्यज्य कथं इत-

स्ततः प्रधावन्ति । तेषामार्त्तचित्कारः मनसि शङ्कां करुणाञ्च सृजति । करुणं नदन्तः भीताः आर्त्ताश्च विहङ्गमा वृक्षात् वृक्षान्तरमनुक्रमन्ति धूमराशयः निखिलं गगनतलं सकलाः च दिशः पिधानयन्ति । खद्योतान् विडम्बयन्तः अग्नि-स्फुलिङ्गाः सञ्चरतां तारागणानां भ्रान्तिं जनयन्ति ।

दमनः— (साश्चर्यं) अहो ! अधुना का गतिः ? अनेन दावानलेन अवरुद्धा आवयोः गन्तव्या सरणी ?

मेनका— तर्हि मार्गान्तरेण निवर्त्त्य गच्छस्व ।

दमनः— भवतु । त्वमपि तूर्णं मामनुगच्छ ।

मेनका – (गगनं विलोक्य सभयं) अयि ! पश्यसि साटोपमारटन्तः भयं जनयन्तः प्रचण्ड-जलदाः कथं स्फुरन्ति प्राची-गगने । लज्जाकुला कुलाङ्गनेव नभोङ्गने कथं विद्योतते विद्युत् ?

दमनः— (सभयं) अहो ! प्रचण्डानि मेघ-खण्डानि चण्डानिलेन मण्डयन्ति नभोमण्डलम् । घनान्धकारेषु विलीयते धरा ॥ कम्पित वनाः प्रभञ्जनाः सवेगं प्रवान्ति । किं कुर्वः ? मेनके ! मम मति विभ्रमः जायते । केनपथा गमिष्यावः ?

मेनका— (सभयं) सुचिन्त्य मार्गेण अग्रेसरो भव ।

दमनः— धूम स्तोमैः घनध्वान्तैश्च मार्गः अवरुद्ध इव प्रतीयते । प्राणिनाम् आर्त्तचित्कारः मेघस्य गुरुगम्भीर-गर्जनञ्च कर्णकुहरं रुन्धन् मनसि भीतिं सञ्चारयति । केवलं सुचपला इयं सौदामिनी आवयोः दुःख दुःखिनी क्षणेक्षणे मार्गं प्रदर्शयति । प्रिये ! मम हस्तमालम्ब्य शनैः शनैः पदं विन्यस्य आगच्छ ।

मेनका— (अधैर्यं) अहो ! प्रारब्धाः वृष्टयः । पर्णकुटीरस्य दूरत्वं कियत् ?

ान — (स्वगतं) हन्त ! विपर्ययौ समुपस्थितौ । किं वा मम दुष्कर्मणः फलमेतत् ? (प्रकाशं) मेनके ! मा अधीरा भव । विपन्नस्य विपदः युगपत् आपतन्ति । अयि ! पश्य तावत् आवाभ्या मासादितः पर्ण-कुटीरस्य द्वारदेशः । तथाहि —

सेयं वल्ली विकचकुसुमा मत्त-भृङ्गा-भिरामा
सोऽशोकोऽयं स्तवकरुचिरः सौरभ-श्री-समृद्धः ।
सा स्थल्येषा मद कल-खगा श्चारुगायन्ति यस्याम्
विद्योतन्ते ललित-लतिका स्तीव्र-वाता-वधूताः ॥ १९

इति पञ्चमदृश्यम् ।



## षष्ठदृश्यम्

( ततः प्रविशति नवजात-कन्यकांधृत्वा मेनका )

मेनका — (सस्मिता) अद्य परिपूर्णमनोरथाहं, समाप्तञ्च मम भव-वास-दुःखम्। मम खलु अवसरः आगतः स्वर्गगमनाय (ऊद्ध्वमवलोक्य) हे देवराज ! अधमया मया ते प्रतिज्ञा पूर्णा। तर्हि दयस्व मम येन प्राप्स्यामि ते पदारविन्दं (परिक्रम्य विचिन्त्य च) अहो ! देवराजेन आदिष्टं यदा भविष्यति तव औरसमपत्यम् तदा ते दुःखान्त कालः, तदा त्वं मातलि-संवाहितेन रथेन पुनः आगमिष्यसि स्वर्लोकम्। परन्तु क्व मातलिः ? क्व वा तत् स्यन्दनम् ? किमपि च न लक्ष्यते। (ऊद्ध्वमवलोक्य)अये ! देवराज ! मर्त्यवासिनीं मेनकां किं विस्मृतवानसि।

( ततः प्रविशति रथेन सह मातलिः )

मातलिः— (सस्मितं) मातः ! देवराजेन सन्दिष्टं अनेन स्यन्देनेन स्वर्ग-गमनाय तर्हि विलम्बेनालम्। एनां नवजात कन्यकां परित्यज्य आगच्छ।

मेनका— (स्वगतं) देवराजस्य स्मृतिपथ वर्त्तिनी खलु अहम् (कन्यामुखं विलोक्य) इमां परम रूपवतीं आत्मजां परित्यज्य स्वर्लोकं गन्तुं मम मनः न बलते। देवराजस्य आदेशः अवश्यं परिपालनीयः तर्हि किं करोमि ?

मातलिः— (सोवेगं) मातः ! किं चिन्तामग्नेव दृश्यसे ?

मेनका — (स्वगतं) तपोधनेन आदिष्टं ममागमनं यावत् त्वयात्र स्थीयतामिति। तर्हि अधुना किं करोमि ? आगमनकालः किल तपोधनस्य (प्रकाशं) मातले ! न हि किञ्चित्। क्षणं अपेक्ष्यताम्।

मातलिः— मातः! सर्वे स्वर्गवासिनः तवागमनपथमपेक्ष्यन्ते तर्हि कथं विलम्ब्यते। सत्वरं सज्जीभूयताम्।

मेनका— (कन्यकामवलोक्य सविषादं) भद्र! अधुनाहं किं करोमि? यत.

पशु-विहङ्ग-कुलेष्वपि दृश्यते
प्रणय-रज्जु-निबन्धन-वृत्तिता।
कनक-पुत्तलिकामिव शोभनां
कथमिमां विजहामि महामते! १

मातलिः— (स्वगतमन्तर्विहस्य) अहो! भव-माया-पाशवद्ध चित्तेयमधुना. नोचेत् कथमेवंविधः मतिभ्रमः अस्याः। (प्रकाशं) देवराजस्य आदेशः भवतीं एकाकिनीं नेतुम्। तस्मात् इमां कन्यकां शिलातले संस्थाप्य आगम्यताम्।

मेनका— भद्र! किं सत्यं गमिष्यामि?

मातलिः— मातः देवराजस्याज्ञा अलङ्घनीया। किं भावयसि? पश्य तावत्—

निकाम नैष्फल्य मुपैति भारती
महाजनोक्ताप्यतिनीच-मानसे।
प्रभामयीपार्वण-चन्द्र-कौमुदी
कुपल्वलं ह्युत्तरली करोति किम्? २

मेनका—भवतु गमिष्यामि तावत् (कन्यकां शिलातले संस्थाप्य साश्रुलोचना) अयि! जाते! अहं ते जननी। परन्तु प्रथमतः त्वत्तः प्रणयपाशः मया छिन्नः। किं करोमि? देवराजस्यायममोघः आदेशः। तमुल्लंघयितुं नास्ति मे शक्तिः। अद्य गच्छाम्यहं स्वलोकम् त्वमत्र चिरजीविनी सुखिनी च भव।

मातलिः— विलम्बं निष्प्रयोजनं, आयाहि सत्वरम्।

मेनका — भवतु, भद्र ! स्यन्दनं सज्जय ! अयमहं गच्छामि । (रथे उप-उपविश्य) भद्र ! त्वर्य्यताम् ।

मातलिः — (स्वगतं) अहो ! दृश्यते स्वार्थ एव जगति सर्वेषां गरीयान् । नोचेत् औरसीं कन्यां का वा माता परिहरेत् ? (प्रकाशं) प्राङ्मुखी उपविश गमिष्यावः तावत् (इति रथं चालयति) ।

मेनका— (स्वगत) देवराजस्य आदेशेन कियत् कालार्थं मया खलु मर्त्य-लोकेऽवतीर्णा । स्वल्प कालेनापि कन्या-वियोग रूपेण एकेनापि दुःखेन दीर्यते मे हृदयम् । तर्हि धन्याः संसारिणः ये एव विधानि दुःखानि बहुशः अनुभवन्ति (प्रस्थिता) ।

(ततः प्रविशति कुश समित् हस्तः चिन्तां नाटयन् दमन मुनिः)

दमनः – (स्वगतं) हन्त ! स्मरोपतप्तेन मया न शोभनं कृतम् यतः स्व-हस्तेन एव विपदः आकर्षिताः । भवतु यद्भावि तन्नूनं भविष्यति (दूरादवलोक्य) आः ! लतामण्डपं किं रिक्तं दृश्यते ? क्वगता मेनका ? अहो ! तामेव उक्त्वा मया गतं यत् मेनके ! मया कुश समित आनयनाय वनं गम्यते । ममागमनं यावत्, त्वयात्र स्थीयताम् इति ? भवतु समीपं यास्यामि । अरे ! तथापि सा न दृश्यते क्व सा गतवती ? (विचिन्त्य) तर्हि नामग्राहं आह्वयामि, मेनके ! मेनके ! क्व गताऽसि ? किं मत्तः निलीयसे ? मह्य क्रुद्धासि वा ? अयि ! सुवदने ! अहं तव क्रोधस्य अभाजनम् । (सभ्रूभङ्गं) अहो ! नास्ति किञ्चित् प्रत्युत्तरम् । भवतु पुनरपि शब्दापयामि ।

अयि ! श्यामे ! मुग्धे ! चपलनयने ! चन्द्रवदने !
शुभे ! कान्ते ! रम्ये ! ललितवर्दने ! कुन्ददशने !
चलापाङ्गे ! पीनोन्नत-कठिन-वक्षोज सुभगे !
त्वया क्षन्त योमे हृदय दयिते ! दूषणचयः ॥ ३

परितो विलोक्य) अहो ! तथापि नास्ति किमपि प्रत्युत्तरम् । भवतु अस्मिन् लताकुञ्जे अन्वेष्यामि । (अन्विष्य) अहो ! अत्रापि च नास्ति । तर्हि कुसुमसुरभितां लता सुघनां स्थलीं च गच्छामि (गत्वा) अहो ! अत्रापि च न दृश्यते, तर्हि किं पर्णकुटीरं गता भवेत् ? नर्मदायाः तीरकाननं वा ? तर्हि अधुना किं करोमि ? (विचिन्त्य) आं ज्ञातम्, नूनं सा मे प्रिया—

कारुण्यार्द्रा मलिनवदना त्यक्त–लाक्षाङ्गरागा
स्वाविर्भूता-क्षि-सलिल तति स्नात वक्षोज-कुम्भा ।
छायाशीते वटतरुतले न्यस्य हस्ते कपोलं
स्मारं स्मारं मम रतिकथां ध्यानमग्नेति मन्ये ।। ४

तर्हि तस्य वटतरोः समीपं गच्छामि । तत्र नूनं स्थास्यति (किंचित् गत्वा) अये ! सुविशालः अयं वटतरुः पल्लवराजिभिः कल-काकली-भिश्च समलंकृतः । तद्दिने अस्य मूले—

कामोन्मत्ते मयि च सहसा संप्रवृत्ते ग्रहीतुं ।
लज्जावत्या विलुलित-कचान् भ्रूकुटीं सा विधाय ।
मामामेति प्रचलितकरा व्यञ्जयन्ती निषेधं
पश्चाद् वद्धा गलित कवरी-भार मुत्तोल्य दोर्भ्यां ।। ५

(विलोक्य) अत्र च सा न लक्ष्यते । भवतु अहमतीव क्लान्तः श्रान्त श्च । अस्य मूले क्षणं विश्रम्यामि (उपविश्य) अहो ! नर्मदायाः शीत वातेन सुशीतलं, कलकाकलीभिश्च कमनीयं, निकुञ्ज-पुञ्जाभिरामं, गुञ्जद् भृङ्गमनोहरं, विविध-प्रसून-राजि-रमणीयं, मनोज्ञ स्थान-मिदम् । किं बहुना ?

अस्मिन् स्थाने प्रणय कुपितां गाढमालिङ्ग्यबाला
मञ्जु कृत्वा शिरसि खचितं मल्लिका पुष्प मेकम् ।

अस्या नद्याः परमरुचिरे ताल-तापिछ कच्छे
कस्त्रस्तन्या वसनममलं कर्षितं नीविबन्धात् ॥ ६

अत्र कुत्राऽपि च सा न दृश्यते (विचिन्त्य) भवतु सरस्तीरेषु अमला- ङ्ग्याः सविशेषा अभिरुचिः । तत्र छाया-द्रुम-तलेषु विहरति । पुष्पाणि संगृह्यमालां रचयति । मृगपोतकेभ्यः तृणानि वितरति । करतालनादैः विश्वस्तान् मयूरान् नर्त्तयति । हंस शावकेभ्यः मृणाल खण्डानि प्रददाति । यदा परिश्रान्ता भवति तदा तत्तीर कुञ्जकदेशे विश्राम्यति । प्रकृति शोभाञ्च निरीक्ष्य तन्मयी भवति । अपि तत्र गता भवेत् ? तत्स्थानमेव गच्छामि (गत्वा) अहो ! तरु-राजि-राजितं, विहग कुल रसितं, सुगन्धि कुसुम-समन्वितं, शीतलछाया परिपूर्ण, सुरम्यं एतत् सरस्तीरम् । किमधिकम् ? एकदा सायंकाले-

अस्मिस्तीरे प्रकृतिरुचिरे केलिकाले सलीलं
कामोद्रेकान्मयि-हृत पटे वारयन्त्याः प्रियायाः ।
व्याज-क्रन्दा-तिमधुर-गिरा कान्त ! देहीति वस्त्रं
धृत्वा पादे मम सशपथं सन्नताङ्गी ययाचे ॥ ७

परन्तु अत्रापि च न संलक्ष्यते । किं करोमि ? (आकाशे दृष्टिं दत्त्वा) अहो ! अधुना सूर्यदेवः गगन मध्यमारुह्य जल-स्थल-गगनेषु स्व-साम्राज्यं विस्तारयति । कुनृपतेः रव तस्य तीक्ष्णकरैः सन्तप्ताः सर्वे म्लानाभाः सञ्जायन्ते । मार-नाराच-विद्धमर्मा-विधुरा कामिनीव इयं वनान्तो तत्तापेन दग्धी भवति । सुदूरदिगन्तेषु मरीचिका नयनयोः नील-जल भ्रमिं आतनोति । तर्हि अधुना क्व गच्छामि ? ( विचिन्त्य ) भवतु घनछाया-पूर्णं तमाल-निकुञ्जं गच्छामि । सुकोमला कदा कदा मध्याह्नकाल यापनाय तत्रागच्छति । अपि तत्र अवश्यं तिष्ठेत् ?।

(गत्वा) इदं तत् रम्य-सौगन्ध्य-युतं तमाल-कुञ्जं वनलक्ष्म्याः वास-भवनमिव आभाति । अत्र तद्दिने मध्याह्नकाले सा कोमलाङ्गी —

श्रावं श्रावं मधुर-मधुरां प्रेमगर्भां गिरं मे
जाता लज्जा-रुण-नतमुखी नील-जीमूत-केशी ।
वक्त्राम्भोजे तदनु विधृते चारुवस्त्रं च तस्याः
भ्रष्टं नालक्षितमपि तया सान्द्ररागान्नितम्बात् ॥ ८

हन्त ! अत्रापि च तस्याः गन्धोऽपि नास्ति किं क्रियते ? भवतु तर्हि इतः किञ्चित् दूरवर्त्ति आम्रकुञ्जं यास्यामि । तत्र यदि गता भवेत् ? (तत्र गत्वा) अहो ! चूतमञ्जरीणां रजोभिः पिञ्जरी कृतं द्विरेफ हुंकृतैः मनोहरं पिकनादरम्यं, मालती-माधवी-मल्लिकादिभिः लताभिः परिपूर्णं चित्ताकर्षि स्थानमिदम् । किं बहुना ?

अस्मिन् कुञ्जे ललित-कुसुमे त्यक्त-वार्त्ता-प्रसङ्गं
रत्यासक्ता हृदय-दयिता मां समाश्लिष्यगाढम् ।
वक्षोदेशे नयन-सलिला-पूर्ण-वक्त्रं निधाय
त्वं सर्वस्वं मुहुरिति च मे वाष्पकण्ठं बभाषे ॥ ९

(परितो विलोक्य) अहो ! इदं तत् सरः । यत्तीरे सा मे प्रिया एकस्मै पद्माय मामनुरुद्धवती । कुसुम सुशोभिता इयं स्थली यत्र सा पुष्पाणि चिनोति स्म । इदं तत् कण्टकाकीर्णं स्थानं, यत्र प्रिया भीता मामालिङ्गितवती । इदं तत् आम्रवनं यत्र प्रिया मधुमयस्वनेन गायति स्म । इदं तत् लताकुञ्जं, यत्र ममोरसि न्यस्तोत्तमाङ्गा स्वपिति स्म । सैव झर-झर-नादिनी निर्झरिणी । सैव तमाल-श्यामला व्याप्त दिग्वलया वनानी । सैव कलहंस-कल-लापिनी कल्लोलिनी । तदेव फुल्लत् पुष्कर सौरभवत् सरः । स एव नभश्चुम्बिशिखरः, वल्ली गुल्म मञ्जुलः महीधरः । स एव पुष्प गन्ध-वाही समीरः । सर्वाणि खलु विद्यन्ते परन्तु क्व सा मे प्रिया ?

हे शैला ! हे वन-तरु-लता ! हे मृग ! व्याघ्र-सिंहाः !
हे दिक्पाला ! विहग निवहा ! हे सरिद्धे सरांसि !

युष्माभिः सा विरस-वदना मुक्तकेशी कृशाङ्गी
चिन्ता खिन्ना सजलनयना किं न दृष्टा प्रिया मे ॥ १०

हा ! केऽपि न ददति प्रत्युत्तरम् । किं करोमि ? (अश्रूणि मुञ्चन्) हा प्रिये ! हा प्रिय शिष्ये ! हा मानिनि ! पुनरपि प्रीति-मधुरैः वचनैः किं नालापयिष्यसि ? सुललित-विलास-भङ्गिभिः किं नाह्लादयिष्यसि ?

त्वया विरहितस्य मे प्राणाः निष्फलाः जीवनञ्च व्यर्थं प्रतिभाति । सैव प्रकृति सुन्दरी न मे चित्तविनोदिनी । सैव काकली कर्णेषु विषमुद्गिरति । तानि कुसुमानि सौरभ-हीनानि नेत्रं नाकर्षन्ति । व्याकुल चित्तस्य मे सर्वं विषमयं प्रतीयते । तथाहि—

नीलाकाशो मलयपवनः श्यामलाभावनानी
ज्योत्स्नाधारा भ्रमरविहगा निम्नगाः पर्वताश्च
सर्वेऽशक्ता उपशमयितुं शोक-वह्निं हृदिस्थं
किंचिन्मात्रं नयन-सलिलं तत्प्रशान्त्यै समर्थम् ॥ ११

(परितो विलोक्य) अहो ! पश्चिमाशां रञ्जयन् बहुक्षणात् पूर्वमेव सूर्यः अस्ताचलं गतः । पूर्वामाशां प्रोद्भासयति चन्द्रमाः । तस्य सुधाधवलं करैरियं वनानी स्निग्धा दृश्यते । कल्लोलिन्याः जलानि नेत्र मुल्लासयन्ति । मृदु-सुरभिताः वाताः तनुं पुलकयन्ति । विहगानां काकली कलकलाः दिक्चक्रं मुखरयन्ति । परन्तु सर्वं मह्यं तिक्तायते । क्षणमपि युगायते । (सकरुणं) हे प्रिये ! त्वं मम न नेत्रविषयिणी तथापि—

मनसि मे समुदेति गुणावलि
दिशि च दृश्यत एव तवाकृतिः ।
पतति कर्ण-युगे ललितः स्वरः
सुनयने ! क्व गताऽसि विहाय माम् ? १२

(विचिन्त्य) तर्हि भवतु आश्रमोपवनमेव गच्छामि। तत्र यदि सा गता भवेत्? (गत्वा) अहो! इदं तत् उपवनं निश्च्योतत् स्निग्ध चन्द्रिकया अतिरमणीयं दृश्यते। अत्र तद्दिने चन्द्रोदयकाले—

तामाश्लिष्य प्रणयरसिकां पक्व-बिम्बा-धराद् द्राक्
गाढ़प्रेम्णा-मृतमभिनवं पातु कामे सलज्जा-
बाला तस्मिन् ललितमधुरे वस्त्रमाच्छादयन्ती
हुं हुं गर्भं परुषवचनं मानिनी सा वितेनें ॥ १२

हन्त! अयं स एव किंशुकतरुः। यत्र तामालिङ्ग्य प्रेम-स्निग्ध-बचनानि भाषितानि। अयं स रसाल-पादपः यत्र तामङ्के निवेश्य मुखारविन्दात् घर्मजलानि प्रमृष्टानि। अयं स वकुलः यत्र तदमल-कपोलात् चूर्ण-कुन्तलानि उत्तोलितानि (ऊर्द्ध्वमवलोक्य) अहो! अत्र हि—

समुदितो मुदितोऽमृत दीधिति-
रूपवने पवनेन विजृम्भ्यते।
सुनतया न तया हि विना मुदे
सुमधुरा मधु-रात्रि-रियं मम ॥ १३

(सकरुणं)अयि! प्राणप्रिये! त्वया कदापि मम वाक्यं नैव उलंघितम् कस्य हेतोः अद्य ते एवंविधः व्यतिक्रमः?

हे! लोलाक्षि! त्वं मे दूरवर्त्तिनी तथापि स्मृति-मुकुरे आलक्ष्यते तव सुललितं वदनारविन्दम्। मर्म-वीणायां झंकृता ते सुधास्पर्द्धिनी वाणी, नयनयोः समक्षं नरीनृत्यन्ते तव मनोहर-विलास-भङ्गयः।

तव कृते अनवरतमश्रुपातैः मम वपुः क्षीयते। धृतिः शीर्यते, तपः कार्श्यमुपैति। कान्तिः म्लायते, उत्साहश्च क्षीणतां याति। परन्तु प्रवर्द्धते मे शोकसागरः ॥

सर्वं जगत् शून्यं प्रतिभाति तमोमयञ्च प्रतीयते । किं करोमि ? क्व वा गच्छामि उपवन-लता-कुञ्ज गहने शिलातले किं सुप्ता भवेत् ? तर्हि तत्स्थामेव गच्छामि । (कियद्दूरं गत्वा स भ्रूभङ्गम्) ।

अहो ! आश्चर्यं ? अस्य कुरुवकस्य शाखायां लम्बमानं तस्याः अमलं वसनम् । अतः अनुमीयते अत्र निकटे कुत्रापि सा वर्त्तते । भवतु अग्रतः गच्छामि (कियद्दूरं गत्वा निरीक्ष्य) अहो ! एतत् एव भूमिनिपतितं छिन्नं तस्याः ग्रैवेयकम् । यत् चन्द्र-कर स्पर्शेन नेत्रमुद्भासयति । नूनं सा अग्रे विद्यते पुरःसरणेन अवश्यं तां द्रक्षामि (कियद्दूरं गत्वा सभ्रूभङ्गं ) ।

अहो ! किमेतत् नवजात शिशोः क्रन्दनध्वनिः श्रूयते । किमत्र विद्यते सा ? तर्हि पश्यामि (गत्वा विलोक्य च) अहो ! सद्योजात कन्यकेयं तर्हि केयं ? केयं ? (निरीक्ष्य) आः ! मम कान्तायाः अशेषमङ्गलावण्यमस्यां संक्रमितमिव आभाति (विचिन्त्य) प्रिये ! प्रिये ! क्व गताऽसि ? हन्त ! कोऽयं मे व्यामोहः ? स्वप्नः ? मतिभ्रमो वा ? (वद्धाञ्जलिर्भूत्वा) ।

हे कृष्ण ! हे केशव ! हे मुरारे !
हे दीनबन्धो ! करुणैक सिन्धो !
केयं कुमारी क्व गता प्रिया मे
सर्वं विचित्रं प्रतिभासतेऽद्य ॥ १४

( नेपथ्ये )

श्रूयते कर्कशकण्ठस्य मुहुर्मुहुरट्टहासः.................. ।

दमनः - (पश्चात् दृष्टि दत्वा) आः ! कस्यायमट्टहासः ? हृदयं मे चकम्पते, (परितः विलोक्य) कोऽपि न दृश्यते ? तर्हि कुतोऽयमट्टहासः ? वद्धाञ्जलिः आकाशे दृष्टि दत्वा) हे भगवन् ! का ते इच्छा ? अहं किञ्चित् नावगच्छामि (विचिन्त्य) स्मृतिपथं मे आयान्ति तस्य

राक्षसस्य परुषोक्तयः । रे कुमार्गचारिन् ! नूनमेतस्य फलमनुभविष्यतीति । वस्तुतः तस्य दुष्कर्मणः फलमेतत् । भवतु अस्य निगूढं तत्त्व ज्ञातुमत्र करोमि ध्यानम् (निमीलित नेत्रोऽभूत्) ।

( नेपथ्ये )

भो यतीन्द्र ! दुःखं माकार्षीः एतत् अवश्यम्भावि ।

दमनः— (चक्षुषी उन्मील्य) कस्यायं ध्वनिः ? कुतो वा आयाति ? अहो ! ज्ञातं देवानामिदं कूटं केवलं मम तपो भङ्गाय । हन्त ! तदपि परिपूर्णम् । आः ! मम एतावान् मतिभ्रमः ? (क्रोधं नाटयन्) अरे ! रे देवाः ! अन्य समाधि-गौरवः।भवतां किं युक्तमेतत् ? न हि त एव निर्दोषाः (विचिन्त्य) इयं पापिनी मम तपसः विघ्नकारिणी । सैव मम द्वादश वर्ष-व्यापि-तपांसि विध्वस्तवती (भ्रूकुटीं विकुञ्च्य) तर्हि दास्यामि तस्यै अभिशापम् (ऊर्ध्वं अवलोक्य) अरे ! रे मायाविनि ! कपटिनि ! तव एतस्मै कर्मणे.......... ।

( नेपथ्ये )

मर्षय, मर्षय यतिराज ! मा छिन्दि अभिशाप-खड्गेन आज्ञानुवर्त्तिनीं सुकोमलामबल लतिकाम्—

गृहाण धैर्यं यतिराज ! साम्प्रतम्
न शापयोग्या ह्यबला सुकोमला ।
सदास्ति वृद्धेः क्षयमेव निश्चितम्
क्षयश्च वृद्धिश्च परस्परं समे ॥ १५

दमनः— (परितो विलोक्य) अरे ! कस्त्वं ? पुनरपि मां वञ्चयितुमिच्छसि ? न मन्यतां कामवशः पूर्वं दमनः इति । अरे मूढ ! मम विघ्न-भूताय तुभ्यमपि दास्याम्यभिशापम् ।

( ततः प्रविशति वीणां वादयन् नारदः )

नारदः— हे यतिराज ! त्वं एतावान् अधीरो भवसि ? यत्र ज्ञान-दीपः प्रज्ज्वलति तत्र अज्ञानतमसः स्थानं क्व ?

दमनः— (सप्रणामं) देवर्षे ! किं वदामि ? अनिर्वचनीयं तत् । धिक् मां, धिक् मे कृत्यं, धिक् मे जीवितं, धिक् मे भाग्यम् (इति भूतले लुठति)

नारदः— महर्षे ! एतत् सर्वं विधेर्विलसितम् । किं क्रियते ? स एव अघटनं घटयति । असम्भवमपि सम्भवयति । विषयेऽस्मिन् निर्बोधानामश्रुपातः भवति । त्वन्तु ज्ञानवान् ।

दमनः— धिक् मे ज्ञानम्, येनाहमधःपतनात् न निवारितः ?

नारदः – महर्षे ! कथं भवान् मत्सर सागरे मग्नः सन् आत्मानं धिक् करोति ? "पापन्तु दुःखस्य निदानम्" निरासक्तः संसारे सुखी भवति ।

दमनः—(उत्थाय) देवर्षे ! कथं मे भाग्य गगने समुदितः विषाद धूमकेतुः ?

नारदः— हे यतिराज ! कथं त्वया एतत् नैव ज्ञातम् ?

जगति हि सुखदं यत् तत्पुनर्दुःखदं नो
नियति नियम एषः प्रोज्झितुं को हि शक्तः ।
यदनु भवति मर्त्यो न्यायतोऽन्यायतो वा
तदिह परगताद् वा केवलं कर्म दोषात् ॥ १६

दमनः— देवर्षे ! तत् कृते सर्वं मया नाशितम् । परिशेषे सा मे प्रतारिका जाता । किमेतत् मे कर्मफलम् ?

नारदः – वाढम् । एतत् ते कर्मफलम् । इह चराचरे जगति न कोऽपि सुखस्य दुःखस्य वा दाता । सर्वे स्वकर्मफलमनुवर्त्तन्ते ।

दमनः— तर्हि कः मुक्तेः सरणीं अधिगच्छति ?

नारदः— यो हि ज्ञानाग्निना कर्मदोषं दग्धी करोति ।

दमनः— (दीर्घं निःश्वस्य) देवर्षे ! भवतः इयं वाणी अव्यभिचारिणी । अद्य भवता ज्ञाननेत्रं मे प्रोन्मीलितं जीवनधारायाः दिग्दर्शनञ्च प्रदत्तम् । मनसः विचिकित्सा चापसारिता (इति पादयोः पतति) ।

नारदः— (उत्थाप्य) हे महर्षे ! तव एतादृशीं दशां विलोक्य स्वयमहमागतोऽस्मि । किं क्रियते ? एतन्नूनं तव कर्मफलम् । नोचेत् क्व त्वद्विधो महर्षिः तपोनिष्ठः ? क्व सा च तपोनिघ्नन्ती हीनाप्सरा मेनका ? अहमाशीर्वदामि त्वं निरासक्तः सन् परमां गतिं लभस्व (प्रस्थितः) ।

दमनः— गतोऽयं नारदः । तदुक्तिस्तु मनः सागरे मे तरङ्गायते । वस्तुतः "पापन्तु दुःखस्य निदानम्" । यन्मया कृतम् तन्मया लब्धम् (निःश्वस्य) धिगमून् प्राणान् । यत्र नास्ति देवानां स्वल्पाऽपि दया । तर्हि एतादृशैः दग्ध-प्राणैः मम किम् ? (आकाशे दृष्टिं दत्त्वा) रे रे देवाः ! अभीष्टप्रदातारोऽपि यूयं मम भाग्यदोषात् प्रतारकाः सञ्जाताः ? तर्हि धिक् मां अधन्यम् । (विचिन्त्य) नारदस्य उक्तिं पालयितुं नास्ति मे धृतिः । इदं दग्धजीवनं नैव धारयामि । तर्हि गच्छामि अस्याचलस्य सानुतः आत्मानमधः निपात्य इमान् हतप्राणान् नाशयामि शान्तिञ्च लप्स्ये (इति पर्वतमारोहति) ।

—*—

## सप्तमदृश्यम्

[ रम्या वैकुण्ठपुरी अनन्त शयनाधिष्ठितो नारायणः
तत्पादवर्त्तिनी लक्ष्मीश्च ।]

लक्ष्मीः—प्रभो ! किमुद्विग्नमना लक्ष्यते ?

नारायणः— (निःश्वस्य) सत्यमुपलक्षितं त्वया । यतो मे परमभक्तः महर्षि दमनः अधुना संकटापन्नः वर्त्तते ।

लक्ष्मीः— (साश्चर्यं) सः भवतः परमभक्तः ? न किञ्चिदुपकृतम् भवता तस्य वराकस्य ?

नारायणः – कमले ! किं क्रियते ? तस्यैतत् कर्मफलम् । अवश्यमनुभोक्तव्यम् ।

लक्ष्मीः— (सासूयं) यदि कर्मफलं न खण्ड्यते तर्हि को लाभः भवतोऽर्च्चनया ? का च भवतः सर्वशक्तिमत्ता ?

नारायणः— (सावष्टम्भं) कमले ! अवहिता भव । अनादि कालादेव एतत् सृष्टं मया यत् कर्मफलं जीवायत्तम् । यः यादृक् कर्त्ता स तादृक् भोक्ता तत्कथं पुनरपि अन्यथा करोमि ?

लक्ष्मीः— इच्छायां सत्यां भवद्विधेषु न दुष्करमेतत् ।

नारायणः— कमले ! येन यदा यत्र यति दुःखं सुखं वा अनुभोक्तव्यम् । तेन तदा तत्र तति सुखदुःखभाजा भूयते इच्छन्नपि अहं तमन्यथा कर्त्तुं न प्रभवामि ।

लक्ष्मीः—(सासूयं) भवतु अलं पल्लवितेन । मनसि मे आकाङ्क्षा समुदेति । कस्य हेतोः स महर्षिः सङ्कटापन्नः ?

नारायणः— (सचिन्तः) यदि कुतूहलं तर्हि श्रूयतां । एकदा वशी सः महेन्द्र

पदाभिलाषी नर्मदातीरे कठोरं तपस्तेपे। ततो नारदात् इदं निशम्य जाताशङ्केन देवराजेन तत्तपोभङ्गाय प्रहिता मेनकाभिधानाप्सरा:।

लक्ष्मी:— तत: किम् ?

नारायण: – ततो गच्छता कालेन तच्चित्तं वशीकृत्य तपो विघ्नं कुर्वन्ती। सा अन्त:सत्त्वा संवृत्ता।

लक्ष्मी: – (साश्चर्यं) अहो ! वशिन: अपि तस्य सा व्रत-भङ्ग-कारिणी जाता ?

नारायण:— किमत्र चित्रम् ? ग्रह विशेषेणेव बुधेनापि संस्पर्शजै: दोषै: गुणैश्च लिप्यते।

लक्ष्मी:— ततस्तत: ?

नारायण:— एकदा स महर्षि: अन्त:सत्त्वां तां एकाकिनीं विरयज्य कुश-समित् आहरणाय वनं प्रस्थितवान्। अस्मिन् काले सा एकं कन्या-रत्नं प्रसूय तं च एकस्मिन् शिलातले संस्थाप्य महेन्द्र प्रेरितेन रथेन स्वर्लोकमागतवती।

लक्ष्मी:— (साश्चर्यं) औरसीं कन्यां विरयज्य स्वर्लोकमागतवती ? धिक् तस्या: मातृत्वम्। ततस्तत:—

नारायण:—तत आगतेन महर्षिणा नवजाता कुमारी विलोकिता। ध्यानेन च सर्वं ज्ञातम्।

लक्ष्मी:— तत: किम् ?

नारायण:—तत: प्रज्वलित-कोपानले तस्मिन् महर्षौ अभिशाप दहनेन छल-नामयीं तां दग्धीकर्त्तुं प्रवृत्ते.........

लक्ष्मी:— (साश्चर्यं) अहो ! न किञ्चित् अत्याहितम् ?

नारायण:— ततो नारद वचसा "स्व कर्मफलमेतदिति" विभाव्य नितान्तं वैराग्यापन्न: अधुना आत्मोत्सर्गाय कृतसंकल्प: वर्त्तते।

लक्ष्मी:— (सभयं) आत्मोत्सर्गाय कृतसङ्कल्प: ? गच्छतु शीघ्रं प्रशमयतु च दु:खं वराकस्य। अन्यच्च पश्यतु भवान् स्वभक्तानां दु:खोपशमनं प्रभो: किं न समुचितं कर्त्तव्यम् ?

नारायण:— सत्यं कमले ! सत्यमेतत् ये आत्मभूतस्य मम शरणं याचन्ते ते कदापि दु:खभाजो न भवन्ति।

( नेपथ्ये )

हे नन्दसूनो ! शिखिपुच्छमौले !
कस्तूरिका-चन्दन-चारुभाल !
मनोज्ञ-वंशी-धृत-पाणि-पद्म !
अकिञ्चनं मां कमलेश ! रक्ष ॥ १

लक्ष्मी:— (आकर्णयन्ती) अहो ! तस्य वराकस्यैवार्त्तनादं श्रूयते। हे प्रभो ! ममाप्यनुरोध: याहि याहि तूर्णं समुद्धर च वराकं अस्या: विपद:।

नारायण:— (अनन्तशयनात् उत्थाय ससम्भ्रमम्) कमले ! शिखिपुच्छं, मोहनवंशीं, कस्तूरिकाचन्दनविलेपनञ्च आनय मदर्थं। यतोऽहं बालगोपालवेशेन तद्दु:खं दूरीकरोमि।

लक्ष्मी:— भवतु (गत्वा तत् सामग्रिणा सह पुन: प्रविश्य) नयतु एतानि।

( नेपथ्ये )

हे पाञ्चजन्योल्लसिताग्र पाणे !
हे नन्दकाम्भोरुह चक्रधारिन् !
कौमोदकी-शोभित-चारुहस्त !
निराश्रयं मां विबुधेश ! रक्ष ॥ २

नारायण:— कमले ! किमधुना करोमि ? एतानि द्रव्याणि निष्प्रयोजनानि संजातानि। तर्हि याहि शीघ्रं खड्गं शङ्ख-चक्र गदा-पद्मानि च मे आनय।

लक्ष्मीः— (ससम्भ्रमं) भवतु । (गत्वा पूर्वोक्तद्रव्यनिकरेण सह पुनः प्रविश्य) प्रभो ! गृह्णातु एतानि । प्रयातु च तुर्णम् ।

नारायणः— (नाट्येन एतानि धृत्वा गन्तुमुपक्रमते)

( नेपथ्ये )

हे शार्ङ्गधारिन् ! वनमाल शोभिन् !
हे कौस्तुभोद्भासित रम्यवक्षः !
हे हार-केयूर-किरीट-जुष्ट !
निरक्षरं मां जगदीश ! रक्ष ॥ ३

नारायणः— (विरक्तः) कमले ! पश्य— अयं वाचालः क्षणें क्षणे नामान्तरेण मामाह्वयति । किं क्रियतेऽधुना ? त्वयानीतानि द्रव्याणि निष्फलानि संजातानि तर्हि याहि शीघ्रमानय च मदर्थं शार्ङ्गधनुः । वनमालं कौस्तुभमणिं हार-केयूर-किरीटानि च । यतोऽहं तैः द्रव्यनिकरैः समलंकृतः सन् यास्यामि तस्याभिमुखम् ।

लक्ष्मीः—(सविषादं) अहो ! अयं वराकः अतीवोद्विग्नः । एकस्मिन् निष्ठा तस्य विलुप्ता । विशेषतः दुःखदग्धाः चपलान्तः करणाः भवन्ति । भवतु तानि द्रव्याणि मम हस्ते निक्षिप । द्रव्यान्तराणि पुनरपि आनयामि (गत्वाद्रव्यनिकरेण सह पुनः प्रविश्य) प्रभो ! एतानि तानि द्रव्याणि नयतु भवान् ।

नारायणः— (तैः द्रव्यनिकरैः समलंकृतः गन्तुमिच्छति) ।

( नेपथ्ये )

हे तप्त-चामीकरवस्त्र-धारिन् !
पद्मालयालंकृत-वामभाग !
विहङ्गमाधीश्वर-पत्र-शालिन् !
अरक्षितं मां हृदयेश ! रक्ष ॥ ४

नारायणः— पश्य कमले ! एतान्यपि प्रयोजनहीनानि संजातानि प्रागेव यदुक्तं तत् किं न सत्यम् ? येन यदा यत्र यति सुखं दुःखं वा अनुभोक्तव्यम्। तेन तदा तत्र तति सुखदुःखभाजा भूयते। किमत्र क्रियते ? तर्हि अधुना गरुत्मानमाह्वय। स्वयञ्च सज्जीभव गमनाय।

लक्ष्मीः— प्रभो ! किं करिष्यति स वराकः ? सद्विचारधारास्य प्रनष्टा। भवान् जगत्पिता। किमेवं भाषते ?

( नेपथ्ये )

अकिञ्चनं मां हृदयेश ! रक्ष
निराश्रयं मां हृदयेश ! रक्ष।
निरक्षरं मां हृदयेश ! रक्ष
अरक्षितं मां हृदयेश ! रक्ष ॥ ५

नारायणः— कमले ! पश्य अस्य वराकस्य चेष्टितम्। यत् अवश्यम्भावि तत् उल्लंघयितुं कः शक्तः ?

लक्ष्मीः—प्रभो ! अस्य हिताहितज्ञानं विलुप्तम्। तस्मात् सः वाचालायते। अधुना सः सर्वतः निराशः सर्वान्तःकरणस्थं भवन्तं हृदयेशरूपेण आह्वयति। तर्हि परिछदेनालम्। येन केनापि वेषेण तद्धृदयात् सहसाविर्भूय रक्षस्व दुःखदग्धं वराकम्।

नारायणः— भवतु कमले ! भवतु अस्याः दुर्दशायाः नूनं मोचयिष्यामि तमेव। अत्राधिष्ठाय केवलं त्वं लक्ष्यस्व।

(ततः प्रविशति पर्वतश्रृङ्गमारुढः बद्धाञ्जलिः दमनमुनिः।)

दमनः— (सकरुणं)

अकिञ्चनं मां हृदयेश ! रक्ष
निराश्रयं मां हृदयेश ! रक्ष।
निरक्षरं मां हृदयेश ! रक्ष
अरक्षितं मां हृदयेश ! रक्ष ॥ ६

( नेपथ्ये )

धैर्य्यं धारय वत्स ! धैर्य्यं धारय ।

दमनः— (बद्धाञ्जलिः पुनः तदेव पठन् उत्प्लवितुं कृतमतिः) ।

(ततः प्रविश्यति चिन्तानुरूपः भगवन्नारायणः) ।

नारायणः—(हस्तमुत्तोल्य) धैर्य्यं धारय वत्स ! धैर्य्यं धारय ।

अधीरतां धीर ! विहाय तूर्णं
हृत्-कन्दरे स्थापय धैर्य्यमार्य्य !
ते यान्ति पारं विपदर्णवस्य
ये धैर्य्य-नौकां दृढ़माश्रयन्ते ॥ ६

दमनः— (विलोक्य साश्चर्यं) अहो ! किं पश्यामि ? यस्य सान्निध्यलाभाय एतावन्तं कालं तपः कृतवान्, यो मम हृदन्धकारस्य दीप्त-विवस्वान्, यस्य करुणा-वारि-लवांश्च प्राप्तुमासीत् मे ईयान् अभिलाषः, सुरासुरार्च्चित-पद-कमलः, नीलेन्दीवर-निन्दित-कलेवरः, श्रीवत्स-लाञ्छनालंकृत वक्षःस्थलः, शङ्ख-चक्र-गदा-पद्म-भूषितकरः, वनमाल कौस्तुभमणिधरः, सोऽयं पीताम्बरः ? अहो ! सफलं मे जन्म सफलञ्च मे तपः (इति पादयोः पतति) ।

नारायणः— (स्मितं कृत्वा) उत्तिष्ठ वत्स ! उत्तिष्ठ, धैर्य्यं च धारय । प्रार्थयस्व च स्वाभीष्टं वरम् ।

दमनः— (उत्थाय बद्धाञ्जलिः)

नाहं याचे सुरपतिपदं मर्त्यलोकाधिपत्यम्
ज्ञानं मानं सुविमलयशः कामिनीं काञ्चनं वा ।
विश्वव्यापिन् पदकमलयोः प्रार्थनेयं ममैका
गायं गायं तवगुण गणान् वासरा मे प्रयान्तु ॥ ७

नारायण—तुष्टोऽहं तवानेन वचनेन । भद्र ! तवैतत् कर्मफलम् । यतो मया

"को धेयः स्वात्मगो देवः" इति स्मारिताऽपि नाधिगणिता । तस्माद् देवानां चेष्टा फलवती जाता । अतः दुःखसागरे निमग्नेनालम् ।

दमनः— प्रभो ! दुखं मे अभीष्टं दुःखमेव, आध्यात्मिकस्य मार्गः । आत्मोन्नतेः सोपानञ्च ।

नारायणः— (कन्यकां धृत्वा)

हे संयमिन् ! गृहाणे मां चेन्मोक्ष-मधु लिप्ससे ।
आख्याय मधुलिप्सेति कन्यकां परिपालय ।।

दमनः— यथादेशः भवतां (कन्यकां गृहीत्वास्वगतम्) अहो ! भगवता प्रदत्तमपूर्वं नाम "मधुलिप्सा" (प्रकाशं) हे भगवन् ! कियत् कालमहं भवदुःखं सहिष्ये ? यतः—

न स्थातुमिच्छामि चिरं भवेऽस्मिन्
स्यां दोषयुक्तो यदि दीर्घजीवो ।
स्फुरत्-प्रभा-मण्डल-बाल चन्द्रः
किमङ्कहीनः परिपूर्णरूपः ।

नारायणः— वत्स ! मा अधीरो भव । तत् कालः आगमिष्यति । यस्मिन् काले चन्द्रमण्डलं विदीर्य्य अवतरिष्यति एको दिव्यमनुजः अस्मिन् आश्रमपदे । इमां च ग्रहीष्यति स्वार्द्धाङ्गिनीरूपेण । तावत् कालः तव अपेक्षणीयः "भोगात् नूनं क्षयिष्यते ते कर्मफलम्" ततस्त्वं जीवन्मुक्तः सन् मम लोकं प्राप्स्यसि ।

दमनः— (बद्धाञ्जलिः) प्रभो ! कृतकृत्योऽभवम् ।

नारायणः— किं ते भूयः उपकरोमि ?

दमनः— (बद्धाञ्जलिः)

नाहं हि याचे भुवनाधिपत्यम्
न चापि भूतिं न सुखं न शान्तिम् ।

नारायणः– तर्हि किं ते कामना ?

दमनः—

मायान्धकारेऽतिघने विलीनान्
जानान् समुत्तारय विश्वमूर्त्ते !

अपि च—

भवतु हि निखिलोर्वी शस्य-सम्भार-गुर्वी
प्रवहतु जनचित्ते शान्ति-पीयूष-धारा ।
सुललित पद-रम्या ज्ञान-विज्ञान-पूर्णा
प्रसरतु वसुमत्यां शुद्ध-गीर्वाण-वाणी ।।

( यवनिकापातः )

—*—